the India Office Library, London. Each of the above two works is a translation of the Gita of 745 stanzas. It is said that there is a Persian translation of the Gita of 745 stt. by Shah Ali Dastgir in the library of the Maharaja of Kashi, numbered 163–56.

We have undertaken to complete the missing stanzas of the Gita. For this purpose we are sending for the copies of all these MSS. We are receiving much help from our friend Pandit Shri Hariramji Pancholi, in securing old MSS. of the Gita in Sanskrit or Persian. He is residing in Kashi since long and is serving the cause of the public as well as of literature.

On securing the wanting MSS. of the Gita, the work of completing the missing stanzas, will be accelerated.

Concerning the Gita, there are in the field many controversies, discussions and problems. Most of them are simply worthless. The Gita is found in the Bhishma Parvan of the Mahabharata. It consists of 18 Chapters and the correct numerical strength of its stanzas is the one given by Vyasa. We have been reading this Gita for the last 5000 years and with the lapse of time the text of the Gita has undergone alterations and become fragmentary in several places. It is, therefore, necessary for us to make up the deficiencies by all the means available to-day.

To set up perverted theories and flimsy hypotheses, or to mangle and disfigure the material body of the Gita by lacerating and wantonly splitting up its textual matter, is tantamount to committing a literary murder of a precious philosophical work such as the Gita admittedly is. Learned scholars ought to refrain from such things.

Twenty-six years ago, the revered Guru Achyuta Swami dwelt in the Girnar. He was an expert in Yoga, Tantra and various other sciences. He knew the past, present and future.

He possessed Yogic perfections and supernatural powers, e.g. invisibility, movement in the sky etc. When aged 125 years, he seemed like a youngman of 25. He used to recite the Gita that is being read at present.

The critical spirit with which I read the Gita at present was lacking in me at that time. It is certain that that Gita consisted of 18 Chapters and was indentical with the current one. The curiosity of knowing whether it possessed the 45 missing stanzas or whether it contained the variant readings that have come to light at present etc. did not arise at that time, because the critical viewpoint which is brought to bear on the problems of the Gita at present, was lacking in me at that time. I only knew that it was a work to be recited for one's spiritual welfare.

This first volume is the English translation of the gloss written on the ancient MS. that we have discovered at present. We have made that MS. the basis, the आदर्शपुस्तकं. As we get time, we are writing and printing the *Chandra-ghanta* commentary anew. We have, so far, printed only two Chapters in 81 pages. We think it will take nearly three months before we shall be able to publish the second volume, containing the *Chandraghanta* commentary along with its English translation.

Nevertheless, it is possible that the publication of the subsequent volume may be delayed, in view of the fact that most of our time is taken up by the work of the Rasashala Aushadhashrama and by various painful obstacles incident to wordly life.

Indeed the reason for even this much delay in the publication of the edition with the commentary *Chandraghanta* is that the *tika* has had to be written out afresh. At first it was written in a very concise style in Sanskrit, but now it has become evident that it should be expanded liberally and on a new scale. For instance the commentary on the expression रथोपस्थ उपाविशत् in the last stanza of the first Chapter came at first

to two lines only, whereas it runs into more than a hundred lines as now published. While the first draft of the commentary on व्यवसायात्मिका बुद्धिः of st. 42, ch. II. extended but to 4 lines, it has now expanded into more than 180 lines. Thus in its new form the *Chandraghanta* would occupy from six to seven times its former bulk. The commentary on each stanza is being written without the solicitude to keep in line with any particular commentator, *i.e.* quite independently with the sole aim of bringing out the actual idea in the author's mind. Again I am hardly able to devote more than 12 to 15 hours a month for Gita work on account of the multiplicity of other engagements, and this fact too may contribute to the delay in publishing the second and third volumes.

After the publication of the second volume with the text of the Gita, the Sanskrit commentary *Chandra-ghanta* and its English translation, the third volume will appear, viz. the Sanskrit Tippani *Siddhi-datri*. This had been composed at first in a concise Sanskrit style, of which a Gujarati rendering was published in the middle of 1936. The present first volume is the English translation of that Gujarati edition. But now I am again writing the Sanskrit *Siddhidatri* in a revised form, wherefrom it is becoming evident that it will also expand to 5 or 6 times the previous size like the *Chandra-ghanta*. After the appearance of this Sanskrit *Siddhi-datri* as the third volume, it will in its turn be translated into English (as it were a second edition) which will be published as a fourth volume. This first volume of English translation contains 153 pages, whereas its revised form to be prepared after the publication of the expanded Sanskrit Tippani will contain about 600 pages. This will give some idea of the revision and enlargement to be carried out in the second edition of the present first volume.

Such is the intention of publishing the Gita volumes as a service. To fulfil the intention is in the hand of the Supreme Self.

If learned scholars and investigators who happen to read this English gloss or our subsequent publications on the Gita, will impartially read them, without being influenced by prejudices or dogmas of sect, creed or system and inform us of their candid opinions, even though they conflict with our opinions, we shall be very grateful to them. If we detect our error thereby, we shall correct it in the second edition.

We request all admirers and learned investigators of the Gita to help us as far as possible, in the task of completing the deficiency of the Gita. We request every admirer of the Gita to participate in this sacred work by helping us, by sending the MSS. of the Gita, whether in Sanskrit, Persian or any other language, if in their possession, or by securing them for us if in the possession of others; or by informing us of the address of the places wherefrom such books can be had; or by sending us copies of such works.

Rasashala
Aushadhashrama
Gondal.
26—2—37.

Rajvaidya Jivaram
Kalidas Shastri.

# ॥ श्री भगवद् गीता ॥

॥ प्राचीनहस्तलिखितपुस्तकाधारेण संशोधिता प्रचलितपाठांतरसहिता ॥

## ॥ प्रथमोऽध्यायः १ ॥

धृतराष्ट्र उवाच ।

धर्मक्षेत्रे कुरुक्षेत्रे सर्वक्षत्रसमागमे ॥
मामकाः पाण्डवाश्चैव किमकुर्वत संजय ॥ १ ॥

संजय उवाच ।

दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्योधनस्तदा ॥
आचार्यमुपसंगम्य राजा वचनमब्रवीत् ॥ २ ॥

पश्य तां पाण्डुपुत्राणामाचार्य महतीं चमूम् ॥
व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता ॥ ३ ॥

अत्र शूरा महेष्वासा भीमार्जुनसमा युधि ॥
युयुधानो विराटश्च द्रुपदश्च महारथः ॥ ४ ॥

धृष्टकेतुश्चेकितानः काशिराजश्च वीर्यवान् ॥
पुरुजित्कुन्तिभोजश्च शैब्यश्च नरपुंगवः ॥ ५ ॥

युधामन्युश्च विक्रांत उत्तमौजाश्च वीर्यवान् ॥
सौभद्रो द्रौपदेयाश्च सर्व एव महारथाः ॥ ६ ॥

अस्माकं तु विशिष्टा ये तान्निबोध द्विजोत्तम ॥
नायकान्मम सैन्यस्य संज्ञार्थं तान्ब्रवीमि ते ॥ ७ ॥

भवान्भीष्मश्च कर्णश्च कृपः शल्यो जयद्रथः ॥
अश्वत्थामा विकर्णश्च सौमदत्तिश्च वीर्यवान् ॥ ८ ॥

अन्ये च बहवः शूरा मदर्थे त्यक्तजीविताः ॥
नानाशस्त्रप्रहरणा नानायुद्धविशारदाः ॥ ९ ॥

अपर्याप्तं तदस्माकं बलं भीष्माभिरक्षितम् ॥
पर्याप्तं त्विदमेतेषां बलं भीमाभिरक्षितम् ॥ १० ॥

अयनेषु तु सर्वेषु यथाभागमवस्थिताः ॥
भीष्ममेवाभिरक्षन्तु भवन्तः सर्व एव हि ॥ ११ ॥

तस्य संजनयन्हर्षं कुरुवृद्धः पितामहः ॥
सिंहनादं विनद्योच्चैः शंखं दध्मौ प्रतापवान् ॥ १२ ॥

ततः शंखाश्च भेर्यश्च पणवाऽऽनकगोमुखाः ॥
सहसैवाऽभ्यहन्यन्त स शब्दस्तुमुलोऽभवत् ॥ १३ ॥

ततः श्वेतैर्हयैर्युक्ते महति स्यन्दने स्थितौ ॥
माधवः पाण्डवश्चैव दिव्यौ शंखौ प्रदध्मतुः ॥ १४ ॥

पांचजन्यं हृषीकेशो देवदत्तं धनंजयः ॥
पौंड्रं दध्मौ महाशंखं भीमकर्मा वृकोदरः ॥ १५ ॥

अनन्तविजयं राजा कुंतीपुत्रो युधिष्ठिरः ॥
नकुलः सहदेवश्च सुघोषमणिपुष्पकौ ॥ १६ ॥

काश्यश्च परमेष्वासः शिखण्डी च महारथः ॥
धृष्टद्युम्नो विराटश्च सात्यकिश्चापराजितः ॥ १७ ॥

पांचालश्च महेष्वासो द्रौपदेयाश्च पंच च ॥
सौभद्रश्च महाबाहुः शंखान्दध्मुः पृथक् पृथक् ॥ १८ ॥

स घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत् ॥
नभश्च पृथिवीं चैव तुमुलोऽभ्यनुनादयन् ॥ १९ ॥

अथ व्यवस्थितान्दृष्ट्वा धार्तराष्ट्रान्कपिध्वजः ॥
प्रवृत्ते शस्त्रसंपाते धनुरुद्यम्य पाण्डवः ॥
हृषीकेशं तदा वाक्यमिदमाह महीपते ॥ २० ॥

अर्जुन उवाच

उभयोः सेनयोर्मध्ये रथं स्थापय मेऽच्युत ॥ २१ ॥
यावदेतान्निरीक्षेऽहं योद्धुकामानवस्थितान् ॥
कैर्मया सह योद्धव्यमस्मिन्रणसमुद्यमे ॥ २२ ॥
योत्स्यमानानवेक्षेऽहं य एतेऽत्र समागताः ॥
धार्तराष्ट्रस्य दुर्बुद्धेर्युद्धे प्रियचिकीर्षवः ॥ २३ ॥

संजय उवाच

एवमुक्तो हृषीकेशो गुडाकेशेन भारत ॥
उभयोः सेनयोर्मध्ये स्थापयित्वा रथोत्तमम् ॥ २४ ॥

भीष्मद्रोणप्रमुखतः सर्वेषां च महीक्षिताम् ॥
उवाच पार्थ पश्यैतान्समवेतान् कुरूनिति ॥ २५ ॥

तत्रापश्यत् स्थितान् पार्थः पितृनथ पितामहान् ॥
आचार्यान्मातुलान्भ्रातृन्पुत्रान् पौत्रान् सखींस्तथा ॥
श्वसुरान् सुहृदश्चैव सेनयोरुभयोरपि ॥ २६ ॥

तान्समीक्ष्य स कौंतेयः सर्वान्बंधूनवस्थितान् ॥
कृपया परयाऽऽविष्टः सीदमानोऽब्रवीदिदम् ॥ २७ ॥

अर्जुन उवाच

दृष्ट्वेमान्स्वजनान्कृष्ण युयुत्सून्समवस्थितान् ॥
सीदन्ति सर्वगात्राणि मुखं च परिशुष्यति ॥ २८ ॥
वेपथुश्च शरीरे मे रोमहर्षश्च जायते ॥
गांडीवं स्रंसते हस्तात्त्वक् चैव परिदह्यते ॥ २९ ॥
न च शक्नोम्यवस्थातु भ्रमतीव च मे मनः ॥
निमित्तानि च पश्यामि विपरीतानि केशव ॥ ३० ॥
न च श्रेयोऽनुपश्यामि हत्वाऽऽहवे स्वबान्धवान् ॥
न कांक्षे विजयं कृष्ण न राज्यं न सुखानि च ॥ ३१ ॥
किं नो राज्येन गोविन्द किं भोगैर्जीवितेन वा ॥
येषामर्थे कांक्षितं नो राज्यं भोगाः सुखानि च ॥ ३२ ॥
त एवेमे स्थिता योद्धुं प्राणांस्त्यक्त्वा सुदुस्त्यजाम् ॥
आचार्याः पितरः पुत्रास्तथैव च पितामहाः ॥ ३३ ॥
मातुलाः श्वसुराः पौत्राः श्यालाः संबन्धिनस्तथा ॥
एतान्न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन ॥ ३४ ॥
अपि त्रैलोक्यराज्यस्य हेतोः किमु महीकृते ॥
निहत्य धार्तराष्ट्रान्नः का प्रीतिः स्याज्जनार्दन ॥ ३५ ॥
पापमेवाऽऽश्रयेदस्मान्हत्वैतानाततायिनः ॥
तस्मान्नार्हा वयं हन्तुं धार्तराष्ट्रान्स्वबान्धवान् ॥
स्वजनान्हि कथं हत्वा सुखिनः स्याम माधवः ॥ ३६ ॥

यद्यप्येते न पश्यन्ति लोभोपहतचेतसः ॥
कुलक्षयकृतं दोषं मित्रद्रोहे च पातकम् ॥ ३७ ॥

कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्तितुम् ॥
कुलक्षयकृतं दोषं संपश्यद्भिर्जनार्दन ॥ ३८ ॥

कुलक्षये प्रणश्यन्ति कुलधर्माः सनातनाः ॥
धर्मे नष्टे कुलं कृत्स्नमधर्मोऽभिभवत्युत ॥ ३९ ॥

अधर्माभिभवात्कृष्ण प्रदुष्यन्ति कुलस्त्रियः ॥
स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसंकरः ॥ ४० ॥

संकरो नरकायैव कुलघ्नानां कुलस्य च ॥
पतन्ति पितरो ह्येषां लुप्तपिंडोदकक्रियाः ॥ ४१ ॥

दोषैरेतैः कुलघ्नानां वर्णसंकरकारकैः ॥
उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः ॥ ४२ ॥

उत्सन्नकुलधर्माणां मनुष्याणां जनार्दन ॥
नरके नियतं वासो भवतीत्यनुशुश्रुम ॥ ४३ ॥

अहो बत महत् पापं कर्तुं व्यवसिता वयम् ॥
यद्राज्यसुखलोभेन स्वजनान्हन्तुमुद्यताः ॥ ४४ ॥

यदि मामप्रतीकारमशस्त्रं शस्त्रपाणयः ॥
धार्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेत् ॥ ४५ ॥

संजय उवाच ।

एवमुक्त्वाऽर्जुनः संख्ये शोकसंविग्नमानसः ॥
उत्सृज्य सशरं चापं रथोपस्थ उपाविशत् ॥ ४६ ॥

इति श्री भगवद्गीतायां श्रीकृष्णार्जुनसंवादे
सैन्यदर्शनो नाम प्रथमोऽध्याय ॥ १ ॥

## प्रथमाध्यायस्य प्रचलित
## श्री भगवद्गीतानुसारं पाठभेदाः

| पाठभेदावतरणं | श्लोकांकाः |
|---|---|
| .... .... .... .... .... समवेता युयुत्सवः | ॥ १ ॥ |
| नानकान्मम .... .... .... .... | ॥ |
| पश्यैतां .... .... .... .... .... | ॥ २ |
| .... .... .... .... .... कृपः शल्या जयद्रथः | ॥ ७ ॥ |
| .... .... .... .... .... सौमदत्तिश्च वीर्यवान् | ॥ ८ |
| .... .... .... .... .... सर्वे युद्धविशारदाः | ॥ ९ |
| अयनेषु च .... .... .... .... | ॥ ११ ॥ |
| द्रुपदो द्रौपदेयाश्च सर्वशः पृथिवीपते .... .... | ॥ १८ |
| सेनयोरुभयोर्मध्ये .... .... .... .... | ॥ २१ |
| धार्तराष्ट्रस्य .... .... .... .... | ॥ २३ |
| सेनयोरुभयो .... .... .... .... | २४ ॥ |
| कृपया परयाविष्टो विषीदन्निदमब्रवीत् .... .... .... | २७ ॥ |
| दृष्ट्वेमं स्वजनं कृष्ण युयुत्सुं समवस्थितं .... .... | ॥ |
| सीदन्ति मम .... .... .... .... | ॥ २८ ॥ |
| .... .... .... .... .... हत्वा स्वजनमाहवे | ॥ ३१ ॥ |
| त इमेऽवस्थिता युद्धे प्राणांस्त्यक्त्वा धनानि च .... | ॥ ३३ |
| .... .... .... .... .... हेतोः किन्नु | ॥ ३५ |
| .... .... .... .... .... सबान्धवान् | ॥ |
| स्वजनं हि .... .... .... .... .... | ॥ ३६ ॥ |
| .... .... .... .... .... प्रपश्यद्भिर्जनार्दन | ३८ ॥ |
| .... .... .... .... .... हन्तुं स्वजनमुद्यताः | ४४ ॥ |
| विसृज्य सशरं .... .... .... .... | ४६ ॥ |

॥ इति प्रथमाध्यायस्य पाठभेदाः ॥

# ॥ श्री भगवद् गीता ॥

॥ प्राचीनहस्तलिखितपुस्तकाधारेण संशोधिता प्रचलितपाठान्तरसहिता ॥

## ॥ द्वितीयोऽध्यायः २ ॥

संजय उवाच ।

तं तथा कृपयाऽऽविष्टमश्रुपूर्णाऽऽकुलेक्षणम् ॥
सीदमानमिदं वाक्यमुवाच मधुसूदन ॥ १ ॥

श्री भगवानुवाच

कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम् ॥
अनार्यजुष्टमस्वर्ग्यमकीर्तिकरमर्जुन ॥ २ ॥

मा क्लैब्यं गच्छ कौन्तेय नैतत्त्वय्युपपद्यते ॥
क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परन्तप ॥ ३ ॥

अर्जुन उवाच

कथं भीष्ममहं संख्ये द्रोणं च मधुसूदन ॥
इषुभिः प्रतियोत्स्यामि पूजार्हावरिसूदन ॥ ४ ॥

गुरूनहत्वा हि महानुभावान् श्रेयस्करं भैक्ष्यमपीह लोके ॥
न त्वर्थकामास्तु गुरूनिहत्य भुंजीय भोगान् रुधिरप्रदिग्धान् ॥ ५ ॥

न चैतद्विद्मः कतरन्नो गरीयो यद्वा जयेम यदि वा नो जयेयुः ॥
यानेव हत्वा न न जिजीविषामस्ते नः स्थिताः प्रमुखे धार्तराष्ट्राः ॥६॥

कार्पण्यदोषोपहतस्वभावः पृच्छामि त्वां धर्मसम्मूढचेताः ॥
यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम्॥७॥

नहि प्रपश्यामि ममापनुद्याद् यः शोकमुच्छोषणमिन्द्रियाणाम् ॥
अवाप्य भूमावसपत्नमृद्धं राज्यं सुराणामपि चाधिपत्यम् ॥ ८ ॥

संजय उवाच

एवमुक्त्वा हृषीकेशं गुडाकेशः परंतप ॥
न योत्स्य इति गोविन्दमुक्त्वा तूष्णीं बभूव ह ॥ ९ ॥
तमुवाच हृषीकेशः प्रहसन्निव भारत ॥
सेनयोरुभयोर्मध्ये सीदमानमिदं वचः ॥ १० ॥

श्री भगवानुवाच

एवं मानुष्येणोपहतान्तरात्मा विषादमोहाभिभवाद्विसंज्ञः ॥
कृपागृहीतः समवेक्ष्य बन्धूनभिप्रपन्नान्मुखमन्तकस्य ॥ ११-१ ॥

अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे ॥
गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ॥ ११-२ ॥

न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः ॥
न चैव न भविष्यामः सर्वे वयमतःपरम् ॥ १२ ॥

देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा ॥
तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति ॥ १३ ॥

मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः ॥
आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भारत ॥ १४ ॥

यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ ॥
समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते ॥ १५ ॥

नाऽसतो विद्यते भावो नाऽभावो विद्यते सतः ॥
उभयोरपि दृष्टोन्तस्त्वनयोस्तत्वदर्शिभिः ॥ १६ ॥

अविनाशि तु तद्विद्धि येन सर्वमिदं ततम् ॥
विनाशमव्ययस्यास्य न कश्चित्कर्तुमर्हति ॥ १७ ॥

अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः ॥
अनाशिनोऽप्रमेयस्य तस्माद्युध्यस्व भारत ॥ १८ ॥

य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् ॥
उभौ तौ न विजानीतो नाऽयं हन्ति न हन्यते ॥ १९ ॥

न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः ॥
अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ॥ २० ॥

वेदाऽविनाशिनं नित्यं य एनमजमव्ययम् ॥
कथं स पुरुषः पार्थ हन्यते हन्ति वा कथं ॥ २१ ॥

वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि ॥
तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही ॥ २२ ॥

नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ॥
न चैनं क्लेदयंत्यापो न शोषयति मारुतः ॥ २३ ॥

अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ॥
नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ॥ २४ ॥

अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते ॥
तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि ॥ २५ ॥

अथचैनं नित्यजातं नित्यं वा मन्यसे मृतम् ॥
तथापि त्वं महाबाहो नैवं शोचितुमर्हसि ॥ २६ ॥

जातस्य हि ध्रुवं मृत्युर्ध्रुवं जन्म मृतस्य च ॥
तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥ २७ ॥

अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ॥
अव्यक्तनिधनान्येव तत्र का परिदेवना ॥ २८ ॥

आश्चर्यवत् पश्यति कश्चिदेनमाश्चर्यवद्वदति तथैव चान्यः ॥
आश्चर्यवच्चैनमन्यः शृणोति श्रुत्वाप्येनं वेद न चैव कश्चित् ॥ २९ ॥

देही नित्यमवध्योऽयं देहे सर्वस्य भारत ॥
तस्मात् सर्वाणि भूतानि नात्र शोचितुमर्हसि ॥ ३० ॥

स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि
धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते ॥ ३१ ॥

यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम् ॥
सुखिनः क्षत्रियाः पार्थ लभंते युद्धमीदृशम् ॥ ३२ ॥
अथ चेत् त्वमिमं धर्म्यं संग्रामं न करिष्यसि ॥
ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि ॥ ३३ ॥
अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम् ॥
संभावितस्य चाकीर्तिर्मरणादतिरिच्यते ॥ ३४ ॥
भयाद्रणादुपरतं मंस्यन्ते त्वां महारथाः ॥
एषां च त्वं बहुमतो भूत्वा यास्यसि लाघवम् ॥ ३५ ॥
अवाच्यवादांश्च बहून् वदिष्यन्ति तवाऽहिताः ॥
निन्दन्तस्तव सामर्थ्यं ततो दुःखतरं नु किम् ॥ ३६ ॥

हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम् ॥
तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः ॥ ३७ ॥
सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ ॥
ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि ॥ ३८ ॥
एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु ॥
बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि ॥ ३९ ॥
नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते ॥
स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥ ४० ॥
व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन ॥
बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ॥ ४१ ॥
यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ॥
वेदवादरताः पार्थ नान्यदस्तीति वादिनः ॥ ४२ ॥
कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदाम् ॥
क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति ॥ ४३ ॥
भोगैश्वर्यप्रसक्तानां तयाऽपहृतचेतसाम् ॥
व्यवसायात्मिका बुद्धिः समाधौ न विधीयते ॥ ४४ ॥
त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन ॥
निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् ॥ ४५ ॥
यावानर्थ उदपाने सर्वतः संप्लुतोदके ॥
तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥ ४६ ॥
कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ॥
मा कर्मफलहेतुर्भूर्मा ते संगोऽस्त्वकर्मणि ॥ ४७ ॥
योगस्थः कुरु कर्माणि संगं त्यक्त्वा धनंजय ॥
सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥ ४८ ॥
यस्य सर्वे समारंभाः निराशीर्बन्धनास्त्विह ॥
त्यागे यस्य हुतं सर्वं स त्यागी स च बुद्धिमान् ॥ ४९ ॥
दूरेण ह्यवरं कर्म बुद्धियोगाद्धनंजय ॥
बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ॥ ५० ॥

बुद्धियुक्तो जहातीमे उभे सुकृतदुष्कृते ॥
तस्माद् योगाय युज्यस्व योगः कर्मसु कौशलम् ॥ ५१ ॥

कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ॥
कर्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥ ५२ ॥

यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति ॥
तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥ ५३ ॥

श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला ॥
समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ॥ ५४ ॥

अर्जुन उवाच

स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव ॥
स्थितधीः किं प्रभाषेत किमासीत व्रजेत किं ॥ ५५ ॥

श्रीकृष्ण उवाच

प्रजहाति यदा कामान् सर्वान्पार्थ मनोगतान् ॥
आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥ ५६ ॥

दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ॥
वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥ ५७ ॥

यः सर्वत्रानभिस्नेहस्तत्तत्प्राप्य शुभाशुभम् ॥
नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥ ५८ ॥

यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः ॥
इन्द्रियाणीन्द्रियार्थेभ्यः तस्य प्रज्ञा प्रतिष्ठिता ॥ ५९ ॥

विषया विनिवर्तन्ते निराहारस्य देहिनः ॥
रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ॥ ६० ॥

यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः ॥
इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥ ६१ ॥

तानि संयम्य मनसा युक्त आसीत मत्परः ॥
वशे हि यस्येन्द्रियाणि स्थितप्रज्ञः स उच्यते ॥ ६२ ॥

ध्यायतो विषयान्पुंसः सङ्गस्तेषूपजायते ॥
सङ्गात्संजायते कामः कामात्क्रोधोऽभिजायते ॥ ६३ ॥

क्रोधाद्भवति संमोहः सम्मोहात्स्मृतिविभ्रमः ॥
स्मृतिभ्रंशाद् बुद्धिनाशो बुद्धिनाशात्प्रणश्यति ॥ ६४ ॥
रागद्वेषविमुक्तस्तु विषयानिन्द्रियैश्चरन् ॥
आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥ ६५ ॥
प्रसादे सर्वदुःखानां हानिरस्योपजायते ॥
प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते ॥ ६६ ॥
नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना ॥
न चाभावयतः शान्तिरशान्तस्य कुतः सुखम् ॥ ६७ ॥
इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते ॥
तदस्य हरति प्रज्ञां वायुर्नावमिवांभसि ॥ ६८ ॥
तस्माद्यस्य महाबाहो निगृहीतानि सर्वशः ॥
इन्द्रियाणीन्द्रियार्थेभ्यः स्थिरप्रज्ञा च सा स्मृताः ॥ ६९ ॥
या निशा सर्वभूतानां तस्यां जागर्ति संयमी ॥
यस्यां जाग्रति भूतानि सा रात्रिः पश्यतो मुनेः ॥ ७० ॥
आपूर्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वत् ॥
तद्वत्कामा यं प्रविशन्ति सर्वे स शान्तिमाप्नोति न कामकामी ॥७१॥
विहाय कामान् यः सर्वान्पुमांश्चरति निःस्पृहः ॥
निर्ममो निरहंकारः स शान्तिमधिगच्छति ॥ ७२ ॥
एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति ॥
स्थित्वास्यामन्तकालेऽपि ब्रह्मनिर्वाणमृच्छति ॥ ७३ ॥

इति श्री भगवद्गीतासु श्रीकृष्णार्जुनसंवादे
साङ्ख्यस्य योगस्य च विवरणो नाम द्वितीयोऽध्यायः ॥ २ ॥

# द्वितीयाध्यायस्य प्रचलित

## श्री भगवद्गीतानुसारं पाठभेदाः

| पाठभेदावतरणं | श्लोकांकाः |
|---|---|
| विषीदंतमिदं .... .... ... .... .... | १ ॥ |
| क्लैब्यं मा स्म गमः पार्थ .... .... .... .... | ॥ २ ॥ |
| गुरूनहत्वा हि महानुभावान् श्रेयो भोक्तुं भैक्ष्यमपीह लोके | ॥ |
| हत्वार्थ कामांस्तु गुरूनिहैव .... .... | ॥ ५ ॥ |
| .... .... .... .... .... स्तेऽवस्थिता | ॥ ६ ॥ |
| .... .... .... .... .... यच्छोकमुच्छो | ॥ ८ |
| .... .... .... .... .... विषीदंतमिदं वचः | १० ॥ |
| अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे .. . .... | ॥ ११ |
| न त्वेवाहं जातु नासं न त्वं नेमे .... .... .... | ॥ |
| .... .... .... .... .. . . ..वयमतः परम् | ॥ १२ ॥ |
| .. . .... .... .... .... कं घातयति हन्ति कं | २१ ॥ |
| अथ चैनं .... .... .... .... | ॥ |
| .... .... .... .... . .. नैनं | ॥ २६ ॥ |
| जातस्य हि ध्रुवो मृत्यु .... .... .... | ॥ २७ |
| ... .... .... ... .... न त्वं शोचितुमर्हसि | ३० ॥ |
| येषां च त्वं .... . .. . . .... .... | ३५ ॥ |
| नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते .... .... | ॥ ४० |
| .... .... .... बुद्धिरेकेह .. . .... | ॥ ४१ |
| वेदवादरताः .... ... .... .... .... | ४२ ॥ |
| कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदाम् | ॥ |
| क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति .... .... | ॥ ४३ ॥ |
| कर्मण्येवाधिकार .... .... .... .... | ४७ ॥ |
| .... .... .... जहातीह .... .... | ॥ ५० |
| जन्मबन्धविनिर्मुक्ता .... .... .... .... | ३३ ॥ |
| स्थितप्रज्ञस्य.... .... .... .... .... | ॥ |

| | | पाठभेदावतरणं | | श्लोकांकाः |
|---|---|---|---|---|
| स्थितधीः | .... | .... व्रजेन किं | .... | ॥ ५४ ॥ |
| .... | .... | .... स्थितप्रज्ञ | .... | ॥ ५५ ॥ |
| .... | .... | .... स्थितधी | .... | ॥ ५६ ॥ |
| .... | .... | .... तस्य प्रज्ञा प्रतिष्ठिता | | ॥ ५७ ॥ |
| .... | .... | .... तस्य प्रज्ञा प्रतिष्ठिता | | ॥ ५८ ॥ |
| यततो ह्यपि | .... | .... | .... | ॥ ६० ॥ |
| .... तानि सर्वाणि संयम्य | | .... | .... | ॥ |
| .... | .... | .... तस्य प्रज्ञा प्रतिष्ठिता | | ॥ ६१ ॥ |
| रागद्वेषविमुक्तैस्तु | .... | .... | .... | ॥ ६४ ॥ |
| .... | .... | .... तस्य प्रज्ञा प्रतिष्ठिता | | ॥ ६८ ॥ |
| .... | .... | .... निशा | | ॥ ६९ ॥ |

त्वं मानुष्येणो....................अर्थं ११–१ श्लोकोऽस्मिन्नध्याये प्राचीनगीतायामधिकः ॥

# ॥ श्री भगवद् गीता ॥

॥ प्राचीनहस्तलिखितपुस्तकाधारेण संशोधिता प्रचलितपाठान्तरसहिता ॥

## ॥ तृतीयोऽध्यायः ३ ॥

अर्जुन उवाच

ज्यायसी चेत्कर्मणस्ते मता बुद्धिर्जनार्दन ॥
तत् किं कर्मणि घोरे मां नियोजयसि केशव ॥ १ ॥
व्यामिश्रेणैव वाक्येन बुद्धिं मोहयसीव मे ॥
तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम् ॥ २ ॥

श्री भगवानुवाच

लोकेऽस्मिन्द्विविधा निष्ठा पुरा प्रोक्ता मयानघ ॥
ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम् ॥ ३ ॥
न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते ॥
न च संन्यसनादेव सिद्धिं समधिगच्छति ॥ ४ ॥
न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत् ॥
कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥ ५ ॥
कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् ॥
इन्द्रियार्थान् विमूढात्मा मिथ्याचारः स उच्यते ॥ ६ ॥
यस्त्विन्द्रियाणि मनसा नियम्याऽऽरभतेऽर्जुन ॥
कर्मेन्द्रियैः कर्मयोगमसक्तः स विशिष्यते ॥ ७ ॥
नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः ॥
शरीरयात्राऽपि च ते न प्रसिद्ध्येदकर्मणः ॥ ८ ॥
यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः ॥
तदर्थं कर्म कौन्तेय मुक्तसंगः समाचर ॥ ९ ॥
सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ॥
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥ १० ॥
देवान्भावयताऽनेन ते देवा भावयन्तु वः ॥
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥ ११ ॥

इष्टान्कामान् हि वो देवा दास्यन्ते यज्ञभाविताः ॥
तैर्दत्ता न प्रदायैभ्यो यो भुंक्ते स्तेन एव सः ॥ १२ ॥
यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः ॥
भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात् ॥ १३ ॥
अन्नाद्भवंति भूतानि पर्जन्यादन्नसंभवः ॥
यज्ञाद् भवति पर्जन्यो यज्ञः कर्मसमुद्भवः ॥ १४ ॥
कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् ॥
तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥ १५ ॥
एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः ॥
अघायुरिन्द्रियारामो मोघं पार्थ स जीवति ॥ १६ ॥
यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ॥
आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते ॥ १७ ॥
नैव तस्य कृतेनाऽर्थो नाऽकृतेनेह कश्चन ॥
न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥ १८ ॥
तस्मादसक्तः सततं कार्यं कर्म समाचर ॥
असक्तो ह्याचरन् कर्म परमाप्नोति पूरुषः ॥ १९ ॥
कर्मणैव हि संसिद्धिमास्थिता जनकादयः ॥
लोकसंग्रहमेवापि संपश्यन् कर्तुमर्हसि ॥ २० ॥
यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ॥
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥ २१ ॥
न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किंचन ॥
नानवाप्तमवाप्तव्यं प्रवर्तेऽथच कर्मणि ॥ २२ ॥
यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः ॥
मम वर्त्मानुवर्तेरन् मनुष्याः पार्थ सर्वशः ॥ २३ ॥
उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् ॥
संकरस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः ॥ २४ ॥
सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत ॥
कुर्याद्विद्वांस्तथाऽसक्तश्चिकीर्षुर्लोकसंग्रहम् ॥ २५ ॥

न बुद्धिभेदं जनयेदज्ञानां कर्मसंगिनाम् ॥
योजयेत्सर्वकर्माणि विद्वान् युक्तः समाचरन् ॥ २६ ॥
प्रकृतेः क्रियमाणानि गुणैः कर्माणि भागशः ॥
अहंकारविमूढात्मा कर्ताहमिति मन्यते ॥ २७ ॥
तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः ॥
गुणा गुणार्थे वर्तन्त इति मत्वा न सज्जते ॥ २८ ॥
प्रकृतेर्गुणसंमूढाः सज्जन्ते गुणकर्मसु ॥
तानकृत्स्नविदो मन्दान् कृत्स्नविन्न विचालयेत् ॥ २९ ॥
मयि सर्वाणि कर्माणि संन्यस्याऽध्यात्मचेतसा ॥
निराशीर्निर्ममो भूत्वा युद्ध्यस्व विगतज्वरः ॥ ३० ॥
ये मे मतमिमं नित्यमनुवर्तन्ति मानवाः ॥
श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते सर्वकिल्बिषैः ॥ ३१ ॥
ये त्वेतदभ्यसूयन्तो नानुऽवर्तन्ति मे मतम् ॥
सर्वज्ञानविमूढांस्तान् विनष्टान् विद्धयचेतसः ॥ ३२ ॥
सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि ॥
प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ॥ ३३ ॥
इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ ॥
तयोर्न वशमागच्छेत्तौ ह्यस्य परिपन्थिनौ ॥ ३४ ॥
श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ॥
स्वधर्मे निधनं श्रेयः परधर्मोदयादपि ॥ ३५ ॥

अर्जुन उवाच

अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः ॥
अनिच्छमानोऽपि बलादाक्रम्येव नियोजितः ॥ ३६ ॥
भवत्येष कथं कृष्ण कथ चैव विवर्धते ॥
किमात्मा कः किमाचारस्तन्ममाऽऽचक्ष्व पृच्छतः ॥ ३७ ॥

श्री भगवानुवाच

एष सूक्ष्मः परः शत्रुर्देहिनामिन्द्रियैः सह ॥
सुखतंत्र इवासीनो मोहयन्पार्थ तिष्ठति ॥ ३८ ॥

कामक्रोधमयो घोरः स्तंभहर्षसमुद्भवः ॥
अहंकारोऽभिमानात्मा दुस्तरः पापकर्मभिः ॥ ३९ ॥
हर्षमस्य निवर्त्यैष शोकमस्य ददाति च ॥
भयं चास्य करोत्येष मोहयंस्तु मुहुर्मुहुः ॥ ४० ॥
स एष कलुषः क्षुद्रश्छिद्रप्रेक्षी धनंजय ॥
रजःप्रवृत्तो मोहात्मा मनुष्याणामुपद्रवः ॥ ४१ ॥
काम एष क्रोध एष रजोगुणसमुद्भवः ॥
महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥ ४२ ॥
धूमेनाऽऽव्रियते वह्निर्यथादर्शो मलेन च ॥
यथोल्बेनाऽऽवृतो गर्भस्तथा तेनाऽयमावृतः ॥ ४३ ॥
आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा ॥
कामरूपेण कौन्तेय दुष्पूरेणानलेन च ॥ ४४ ॥
इन्द्रियाणि मनोबुद्धिरस्याधिष्ठानमुच्यते ॥
एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनाम् ॥ ४५ ॥
तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ ॥
पाप्मानं प्रजहिह्येनं ज्ञानविज्ञाननाशनम् ॥ ४६ ॥
इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः ॥
मनसस्तु परा बुद्धिर्बुद्धेर्यः परतस्तु सः ॥ ४७ ॥
एवं बुद्धेः परं बुद्ध्वा संस्तभ्याऽऽत्मानमात्मना ॥
जहि शत्रुं महाबाहो कामरूपं दुरासदम् ॥ ४८ ॥

इति श्रीभगवद्गीतायां श्रीकृष्णार्जुनसंवादे
कर्मयोगो नाम तृतीयोऽध्यायः ॥ ३ ॥

# तृतीयाध्यायस्य प्रचलित

## श्री भगवद्गीतानुसारं पाठभेदाः

| पाठभेदावतरणं | श्लोकांकाः |
|---|---|
| व्यामिश्रेणेव वाक्येन .... .... ... .... | ॥ २ |
| इष्टान्भोगान्हि वो .... .... .... .... | ॥ १२ ॥ |
| मम वर्त्मानुवर्तंने .... .... ... .. | ॥ २३ ॥ |
| जोषयेत् .... .... .... .... | ॥ २६ |
| .... .... .... .... कर्माणि सर्वशः | ॥ २७ |
| गुणा गुणेषु .... .... .... .... | ॥ २८ ॥ |
| .... .... नित्यमनुतिष्ठंति .... .... | ॥ |
| .... .... ... .... मुच्यंते तेऽपि कर्मभिः | ॥ ३१ ॥ |
| .... .... .... .... नानुतिष्ठंति मे मतं | ॥ |
| .... .... .. .. विद्धि नष्टानचेतसः | ॥ ३२ |
| .... .... ... ... परधर्मो भयावहः | ॥ ३४ |
| अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः ... .... | ॥ ३६ ॥ |
| ॥ अत्र ५ श्लोकाः प्राचीनपुस्तके अधिकाः सन्ति ॥ | |
| .... ... .... ... तथा तेनेदमावृतं | ॥ ३८ ॥ |
| दुष्पूरेणानलेन च .... ... .... .... | ॥ ३९ ॥ |
| पाप्मानं प्रजहि ह्येनं .... .... .... .... | ॥ ४१ ॥ |

——:(०):——

# ॥ श्री भगवद् गीता ॥

॥ प्राचीनहस्तलिखितपुस्तकाधारेण संशोधिता प्रचलितपाठांतरसहिता ॥

## ॥ चतुर्थोऽध्यायः ४ ॥

श्री भगवानुवाच

एवं विवस्वते योगं प्रोक्तवानहमव्ययम् ॥
विवस्वान् मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् ॥ १ ॥
एवं परंपराख्यातमिमं राजर्षयो विदुः ॥
स कालेनेह महता योगो नष्टः परंतप ॥ २ ॥
स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः ॥
भक्तोऽसि मे सखा चेति रहस्यं ह्येतदुत्तमम् ॥ ३ ॥

अर्जुन उवाच

अपरं भवतो जन्म परं जन्म विवस्वतः ॥
कथमेतद्विजानीयां त्वमादौ प्रोक्तवानिति ॥ ४ ॥

श्री भगवानुवाच

बहूनि मे व्यतीतानि जन्मानि तव चार्जुन ॥
तान्यहं वेद सर्वाणि न त्वं वेत्थ परंतप ॥ ५ ॥
अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ॥
प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया ॥ ६ ॥
यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ॥
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥ ७ ॥
परित्राणाय साधूनां विनाशाय च दुष्कृताम् ॥
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ॥ ८ ॥
जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः ॥
त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ॥ ९ ॥
वीतरागभयक्रोधा मन्मया मामुपाश्रिताः ॥
बहवो ज्ञानतपसा पूता मद्भावमागताः ॥ १० ॥
ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ॥
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥ ११ ॥

काङ्क्षन्तः कर्मणां सिद्धिं यजन्त इह देवताः ॥
क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा ॥ १२ ॥

चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागतः ॥
तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम् ॥ १३ ॥

न मां कर्माणि लिम्पन्ति न मे कामः फलेष्वपि ॥
इति मां योभिजानाति कर्मभिर्न स बध्यते ॥ १४ ॥

एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः ॥
कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतम् ॥ १५ ॥

किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः ॥
तत्ते कर्म प्रवक्ष्यामि यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ १६ ॥

कर्मणोपि हि बोद्धव्यं बोद्धव्यं च विकर्मणः ॥
अकर्मणश्च बोद्धव्यं गहना कर्मणो गतिः ॥ १७ ॥

कर्मण्यकर्म यः पश्यत्यकर्मणि च कर्म यः ॥
स बुद्धिमान्मनुष्येषु स युक्तः कृत्स्नकर्मकृत् ॥ १८ ॥

यस्य सर्वे समारम्भाः कामसंकल्पवर्जिताः ॥
ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः ॥ १९ ॥

त्यक्त्वा कर्मफलासंगं नित्यतृप्तो निराश्रयः ॥
कर्मण्यभिप्रवृत्तोपि नैव किंचित्करोति सः ॥ २० ॥

निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः ॥
शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥ २१ ॥

यदृच्छालाभसन्तुष्टो द्वंद्वातीतो विमत्सरः ॥
समः सिद्धावसिद्धौ च कृत्वापि न निबध्यते ॥ २२ ॥

गतसंगस्य मुक्तस्य ज्ञानावस्थितचेतसः ॥
यज्ञायाचरतः कर्म समग्रं प्रविलीयते ॥ २३ ॥

ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ॥
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥ २४ ॥

दैवमेवापरे यज्ञं योगिनः समुपासते ॥
ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति ॥ २५ ॥

श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति ॥
शब्दादीन् विषयानन्ये इन्द्रियाग्निषु जुह्वति ॥ २६ ॥
सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे ॥
आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते ॥ २७ ॥
द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथापरे ॥
स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः ॥ २८ ॥
अपाने जुह्वति प्राणं प्राणेऽपानं तथाऽपरे ॥
प्राणापानगती रुद्ध्वा प्राणायामपरायणाः ॥
अपरे नियताहाराः प्राणान्प्राणेषु जुह्वति ॥ २९ ॥
सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः ॥
यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनम् ॥ ३० ॥
नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम ॥ ३१ ॥
एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे ॥
कर्मजान् विद्धि तान् सर्वानेवं ज्ञात्वा विमोक्ष्यसे ॥ ३२ ॥
श्रेयान् द्रव्यमयाद्यज्ञात् ज्ञानयज्ञः परंतप ॥
सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ॥ ३३ ॥
तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ॥
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥ ३४ ॥
यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव ॥
येन भूतान्यशेषाणि द्रक्ष्यस्यात्मन्यथो मयि ॥ ३५ ॥
अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः ॥
सर्वं ज्ञानप्लवेनैव वृजिनं संतरिष्यसि ॥ ३६ ॥
यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन ॥
ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥ ३७ ॥
नहि ज्ञानेन सदृशं पवित्रमिह विद्यते ॥
तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति ॥ ३८ ॥
श्रद्धावान् लभते ज्ञानं तत्परः संयतेन्द्रियः ॥
ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ॥ ३९ ॥

काङ्क्षन्तः कर्मणां सिद्धिं यजन्त इह देवताः ॥
क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा ॥ १२ ॥
चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागतः ॥
तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम् ॥ १३ ॥
न मां कर्माणि लिम्पन्ति न मे कामः फलेष्वपि ॥
इति मां योभिजानाति कर्मभिर्न स बध्यते ॥ १४ ॥
एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः ॥
कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतम् ॥ १५ ॥
किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः ॥
तत्ते कर्म प्रवक्ष्यामि यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ १६ ॥
कर्मणोपि हि बोद्धव्यं बोद्धव्यं च विकर्मणः ॥
अकर्मणश्च बोद्धव्यं गहना कर्मणो गतिः ॥ १७ ॥
कर्मण्यकर्म यः पश्यत्यकर्मणि च कर्म यः ॥
स बुद्धिमान्मनुष्येषु स युक्तः कृत्स्नकर्मकृत् ॥ १८ ॥
यस्य सर्वे समारंभाः कामसंकल्पवर्जिताः ॥
ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः ॥ १९ ॥
त्यक्त्वा कर्मफलासंगं नित्यतृप्तो निराश्रयः ॥
कर्मण्यभिप्रवृत्तोपि नैव किंचित्करोति सः ॥ २० ॥
निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः ॥
शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥ २१ ॥
यदृच्छालाभसन्तुष्टो द्वंद्वातीतो विमत्सरः ॥
समः सिद्धावसिद्धौ च कृत्वापि न निबध्यते ॥ २२ ॥
गतसंगस्य मुक्तस्य ज्ञानावस्थितचेतसः ॥
यज्ञायाचरतः कर्म समग्रं प्रविलीयते ॥ २३ ॥
ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ॥
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥ २४ ॥
दैवमेवापरे यज्ञं योगिनः समुपासते ॥
ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति ॥ २५ ॥

श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति ॥
शब्दादीन् विषयानन्ये इन्द्रियाग्निषु जुह्वति ॥ २६ ॥
सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे ॥
आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते ॥ २७ ॥
द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथापरे ॥
स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः ॥ २८ ॥
अपाने जुह्वति प्राणं प्राणेऽपानं तथाऽपरे ॥
प्राणापानगती रुद्ध्वा प्राणायामपरायणाः ॥
अपरे नियताहाराः प्राणान्प्राणेषु जुह्वति ॥ २९ ॥
सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः ॥
यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनम् ॥ ३० ॥
नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम ॥ ३१ ॥
एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे ॥
कर्मजान् विद्धि तान् सर्वानेवं ज्ञात्वा विमोक्ष्यसे ॥ ३२ ॥
श्रेयान् द्रव्यमयाद्यज्ञात् ज्ञानयज्ञः परंतप ॥
सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ॥ ३३ ॥
तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ॥
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥ ३४ ॥
यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव ॥
येन भूतान्यशेषाणि द्रक्ष्यस्यात्मन्यथो मयि ॥ ३५ ॥
अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः ॥
सर्वं ज्ञानप्लवेनैव वृजिनं संतरिष्यसि ॥ ३६ ॥
यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन ॥
ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥ ३७ ॥
नहि ज्ञानेन सदृशं पवित्रमिह विद्यते ॥
तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति ॥ ३८ ॥
श्रद्धावान् लभते ज्ञानं तत्परः संयतेन्द्रियः ॥
ज्ञानं लब्ध्वा परं शान्तिमचिरेणाधिगच्छति ॥ ३९ ॥

अज्ञश्चाश्रद्धानश्च संशयात्मा विनश्यति ॥
नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ॥ ४० ॥

योगसंन्यस्तकर्माणं ज्ञानसंछिन्नसंशयम् ॥
आत्मवन्तं न कर्माणि निबध्नंति धनंजय ॥ ४१ ॥

तस्मादज्ञानसंभूतं हृत्स्थं ज्ञानासिनात्मनः ॥
छित्वैवं संशयं योगमातिष्ठोत्तिष्ठ भारत ॥ ४२ ॥

इति श्रीभगवद्गीतायां श्रीकृष्णार्जुन संवादे
ज्ञानकर्मसंन्यासविविधयज्ञविभागो नाम चतुर्थोऽध्यायः ॥ ४ ॥

—:(०):—

## चतुर्थाऽध्यायस्य प्रचलीत
### श्री भगवद्गीतानुसारं पाठभेदाः

| पाठभेदावतरणं | | | | श्लोकांकाः |
|---|---|---|---|---|
| इमं | .... | .... | . | ॥ १ |
| एवं परंपराप्राप्तं | | ... | ... | ॥ २ |
| .... | .... | .... | .... मामुपाश्रिताः | ॥ १० |
| .... | .... | .... | ... गुणकर्मविभागशः | ॥ १३ |
| . | .... | .... | .... न मे कर्मफले स्पृहा | ॥ १४ |
| कर्मणो ह्यपि बोद्धव्यं | | . | .... | ॥ १७ |
| कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः | | | | ॥ |
| .... | .... | .... | ... स युक्त कृत्स्नकर्मकृत् | ॥ १८ |
| यज्ञायाचरतः कर्म | | .... | ... | ॥ २३ ॥ |
| .... | .... | .... | ... योगिनः पर्युपासते | ॥ २५ |
| येनभूतान्यशेषेण | | ... | .... | ॥ ३५ ॥ |
| अपि चेदसि पापेभ्यः | | .... | .... | ॥ ३६ ॥ |
| छित्वैनं | .... | .... | .... | ॥ ४२ ॥ |

—:(०):—

# ॥ श्री भगवद् गीता ॥

॥ प्राचीनहस्तलिखितपुस्तकाधारेण संशोधिता प्रचलितपाठान्तरसहिता ॥

## ॥ पंचमोऽध्यायः ५ ॥

अर्जुन उवाच

संन्यासं कर्मणां कृष्ण पुनर्योगं च शंससि ॥
यच्छ्रेय एतयोरेकं तन्मे ब्रूहि विनिश्चितम् ॥ १ ॥

श्री भगवानुवाच

संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ ॥
तयोस्तु कर्मसंन्यासात् कर्मयोगो विशिष्यते ॥ २ ॥
ज्ञेयः स नित्यसंन्यासी यो न द्वेष्टि न कांक्षति ॥
निर्द्वन्द्वो हि महाबाहो सुखं बन्धाद् विमुच्यते ॥ ३ ॥
सांख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः ॥
एकमप्यास्थितः सम्यगुभयोः फलमश्नुते ॥ ४ ॥
यत्सांख्यैः प्राप्यते स्थानं तद्योगैरनुगम्यते ॥
एकं सांख्यं च योगं च यः पश्यति स पश्यति ॥ ५ ॥
संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः ॥
योगयुक्तो मुनिर्ब्रह्म न चिरेणाधिगच्छति ॥ ६ ॥
योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः ॥
सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ॥ ७ ॥
नैव किंचित् करोमीति युक्तो मन्येत तत्त्ववित् ॥
पश्यन् शृण्वन् स्पृशन् जिघ्रन्नश्नन् गच्छन्स्वपन्श्वसन् ॥ ८ ॥
प्रलपन् विसृजन् गृह्णन्नुन्मिषन्निमिषन्नपि ॥
इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन् ॥ ९ ॥
ब्रह्मण्याधाय कर्माणि संगं त्यक्त्वा करोति यः ॥
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥ १० ॥
कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि ॥
योगिनः कर्म कुर्वन्ति संगं त्यक्त्वात्मसिद्धये ॥ ११ ॥

युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम् ॥
अयुक्तः कामकारेण फले सक्तो निबद्ध्यते ॥ १२ ॥

सर्वकर्माणि मनसा संन्यस्याऽऽस्ते सुखं वशी ॥
नवद्वारे पुरे देही नैव कुर्वन्न कारयन् ॥ १३ ॥

न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः ॥
न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते ॥ १४ ॥

नादत्ते कस्यचित्पापं न चैव सुकृतं विभुः ॥
अज्ञानेनावृतं ज्ञानं तेन मुह्यंति जन्तवः ॥ १५ ॥

ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ॥
तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम् ॥ १६ ॥

तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ॥
गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥ १७ ॥

स्मरन्तोऽपि मुहुस्त्वेतत्स्पृशंतोऽपि स्वकर्मणि ॥
सक्ता अपि न सज्जन्ति पंके रविकरा इव ॥ १८ ॥

विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि ॥
शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥ १९ ॥

इहैव तैर्जितः स्वर्गो येषां साम्ये स्थितं मनः ॥
निर्दोषं हि समं ब्रह्म तस्माद् ब्रह्मणि ते स्थिताः ॥ २० ॥

न प्रहृष्येत्प्रियं प्राप्य नो द्वेष्टि प्राप्य चाप्रियम् ॥
स्थिरबुद्धिरसंमूढो ब्रह्मविद् ब्रह्मणि स्थितः ॥ २१ ॥

बाह्यस्पर्शेष्वसक्तात्मा विन्दत्यात्मनि यः सुखम् ॥
स ब्रह्मयोगयुक्तात्मा सुखमक्षयमश्नुते ॥ २२ ॥

ये हि संसर्गजा भोगा दुःखयोनय एव ते ॥
आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः ॥ २३ ॥

शक्नोतीहैव यः सोढुं प्राक् शरीरविमोक्षणात ॥
कामक्रोधोद्भवं वेगं स योगी स सुखी नरः ॥ २४ ॥

अन्तःसुखोन्तरारामस्तथान्तर्ज्योतिरेव यः ॥
स पार्थ परमं योगं ब्रह्मभूतोधिगच्छति ॥ २५ ॥

लभन्ते ब्रह्मनिर्वाणमृषयः क्षीणकल्मषाः ॥
छिन्नद्वैधा यतात्मानः सर्वभूतहिते रताः ॥ २६ ॥
कामक्रोधविमुक्तानां यतीनां यतचेतसाम् ॥
अभितो ब्रह्मनिर्वाणं वर्तते विदितात्मनाम् ॥ २७ ॥
स्पर्शान्कृत्वा बहिर्बाह्यांश्चक्षुश्चैवान्तरे भ्रुवोः ॥
प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ ॥ २८ ॥
यतेन्द्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः ॥
विगतेच्छाभयक्रोधो यः सदा मुक्त एव सः ॥ २९ ॥
भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ॥
सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ॥ ३० ॥

इति श्री भगवद्गीतायां श्रीकृष्णार्जुनसंवादे
संन्यासयोगो नाम पंचमोध्याय ॥ ५ ॥

## पंचमाध्यायस्य प्रचलित

### श्री भगवद्गीतानुसारं पाठभेदाः

| पाठभेदावतरणं | | | श्लोकांकाः |
|---|---|---|---|
| .... | .... | .... सुनिश्चितं | ॥ १ ॥ |
| .... | | .... प्रमुच्यते | ॥ ३ ॥ |
| .... | | .... तद्योगैरपि गम्यते | ॥ ५ |
| प्रलपन् विसृजन् | | .... | ॥ ९ |
| संगं त्यक्त्वात्मशुद्धये | .... | .... | ॥ ११ । |
| .... | .... | .... ज्ञाननिर्धूतकल्मषाः | ॥ १७ । |
| ॥ अत्रैकः श्लोकोऽधिकः प्राचीने ॥ | | | |
| इहैव तैर्जितः सर्गो | .... | .... | ॥ १९ |
| .... | .... | .... नोद्विजेत्प्राप्य चाप्रियं | ॥ २० |
| .... | .... | .... यत्सुखं | ॥ |
| .... | .... | ... सुखमक्षयमश्नुते | ॥ २१ ॥ |
| ये हि संस्पर्शजा भोगाः | | .... | ॥ २२ |
| .... | .... | .... स योगी स सुखी नरः | ॥ २३ ॥ |
| योन्तः सुखोन्तराराम | .... | .... | ॥ २४ |
| कामक्रोधवियुक्तानां | .... | .... | ॥ २६ |
| विगतेच्छाभयक्रोधो | .... | .... | ॥ २८ ॥ |

——:(०):——

# ॥ श्री भगवद् गीता ॥

## ॥ षष्ठोऽध्यायः ६ ॥

श्री भगवानुवाच

अनाश्रितः कर्मफलं कार्यं कर्म करोति यः ॥
स संन्यासी च योगी च न निरग्निर्न चाक्रियः ॥ १ ॥
यं संन्यासमिति प्राहुर्योगं तं विद्धि पाण्डव ॥
न ह्यसंन्यस्तसंकल्पो योगी भवति कश्चन ॥ २ ॥
आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ॥
योगारूढस्य तस्यैव शमः कारणमुच्यते ॥ ३ ॥
यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते ॥
सर्वसंकल्पसंन्यासी योगारूढस्तदोच्यते ॥ ४ ॥
उद्धरेदात्मनात्मानं नात्मानमवसादयेत् ॥
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ॥ ५ ॥
बन्धुरात्मात्मनस्तस्य येनैवात्मात्मना जितः ॥
अनात्मनस्तु शत्रुत्वे वर्तेतात्मैव शत्रुवत् ॥ ६ ॥
जितात्मनः प्रशान्तस्य परमात्मा समाहितः ॥
शीतोष्णसुखदुःखेषु तथा मानावमानयोः ॥ ७ ॥
ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः ॥
युक्त इत्युच्यते योगी समलोष्टाश्मकांचनः ॥ ८ ॥
सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु ॥
साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते ॥ ९ ॥
योगी युंजीत सततमात्मानं रहसि स्थितः ॥
एकाकी यतचित्तात्मा निराशीरपरिग्रहः ॥ १० ॥
शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः
नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् ॥ ११ ॥
तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः ॥
उपविश्यासने युंज्याद्योगमात्मविशुद्धये ॥ १२ ॥

समकायशिरोग्रीवं धारयन्नचलः स्थितः ॥
संपश्यन्नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥ १३ ॥
प्रशान्तात्मा विगतभीर्ब्रह्मचारिव्रते स्थितः ॥
मनः संयम्य मच्चितो युक्त आसीत मत्परः ॥ १४ ॥
युंजन्नेवं सदात्मानं मद्भक्तो नान्यमानसः ॥
शान्ति निर्वाणपरमां मत्संस्थामधिगच्छति ॥ १५ ॥
योगोस्ति नैवात्यशतो न चैकान्तमनश्नतः ॥
न चातिस्वप्नशीलस्य नातिजागरतोऽर्जुन ॥ १६ ॥
युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ॥
युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥ १७ ॥
यदा विनियतं चित्तमात्मन्येवावतिष्ठते ॥
निःस्पृहः सर्वकामेभ्यो युक्त इत्युच्यते तदा ॥ १८ ॥
यथा दीपो निवातस्थो नेंगते सोपमा स्मृता ॥
योगिनो यतचित्तस्य युंजतो योगमात्मनि ॥ १९ ॥
यत्रोपरमते चित्तं निरुद्धं योगसेवनात् ॥
यत्र चैवात्मनात्मानं पश्यन्नात्मनि तुष्यति ॥ २० ॥
सुखमात्यंतिकं यत्र बुद्धिग्राह्यमतीन्द्रियम् ॥
वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः ॥ २१ ॥
यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ॥
यस्मिन् स्थितो न दुःखेन गुरुणापि विचाल्यते ॥ २२ ॥
तं विद्याद् दुःखसंयोगवियोगं योगसंज्ञितम् ॥
स निश्चयेन योक्तव्यो योगो निर्विण्णचेतसा ॥ २३ ॥
संकल्पप्रभवान्कामांस्त्यक्त्वा सर्वानशेषतः ॥
मनसैवेन्द्रियग्रामं विनियम्य समन्ततः ॥ २४ ॥
शनैः शनैरुपरमेद् बुद्ध्या धृतिगृहीतया ॥
आत्मसंस्थं मनः कृत्वा न किंचिदपि चिंतयेत् ॥ २५ ॥
यतो यतो निश्चरति मनश्चंचलमस्थिरम् ॥
ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥ २६ ॥

प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम् ॥
उपैति शान्तरजसं ब्रह्मभूतमकल्मषम् ॥ २७ ॥
युञ्जन्नेवं सदात्मानं योगी नियतमानसः ॥
सुखेन ब्रह्मसंयोगमत्यन्तमधिगच्छति ॥ २८ ॥
सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ॥
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥ २९ ॥
यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ॥
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥ ३० ॥
सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः ॥
सर्वथा वर्तमानोपि स योगी मयि वर्तते ॥ ३१ ॥
आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन ॥
सुखं वा यदि वा दुःखं स योगी परमो मतः ॥ ३२ ॥

अर्जुन उवाच

योऽयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन ॥
एतस्याहं न पश्यामि चंचलत्वात् स्थितिं स्थिराम् ॥ ३३ ॥
चंचलं हि मनः कृष्ण प्रमाथि बलवद् दृढम् ॥
तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ॥ ३४ ॥

श्री भगवानुवाच

असंशयं महाबाहो मनो दुर्निग्रहं चलम् ॥
अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ॥ ३५ ॥
असंयतात्मना योगो दुष्प्राप इति मे मतिः ॥
वश्यात्मना तु यतता शक्योऽवाप्तुमुपायतः ॥ ३६ ॥

अर्जुन उवाच

अयतः श्रद्धयोपेतो योगाचलितमानसः ॥ ३७ ॥
लिप्समानः सतां मार्गं प्रमूढो ब्रह्मणः पथि ॥
अनेकचित्तोऽविभ्रान्तो मोहस्यैव वशंगतः ॥ ३८ ॥
अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति ॥
कच्चिन्नोभयविभ्रष्टश्छिन्नाभ्रमिव नश्यति ॥
अप्रतिष्ठो महाबाहो विमूढो ब्रह्मणः पथि ॥ ३९ ॥

एतन्मे संशयं कृष्ण च्छेत्तुमर्हस्यशेषतः ॥
त्वदन्यः संशयस्यास्य च्छेत्ता न ह्युपपद्यते ॥ ४० ॥

श्री भगवानुवाच

पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते ॥
नहि कल्याणकृत् कश्चिद् दुर्गतिं तात गच्छति ॥ ४१ ॥
प्राप्य पुण्यकृतांल्लोकानुषित्वा शाश्वतीः समाः ॥
शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ॥ ४२ ॥
अथवा योगिनामेव कुले भवति धीमताम् ॥
एतद्धि दुर्लभतरं लोके जन्म यदीदृशम् ॥ ४३ ॥
तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम् ॥
ततो भूयोपि यतते संसिद्धौ कुरुनन्दन ॥ ४४ ॥
पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सन् ॥
जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते ॥ ४५ ॥
प्रयत्नाद्यतमानस्तु योगी संशुद्धकिल्बिषः ॥
अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥ ४६ ॥
तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः ।
कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन ॥ ४७ ॥
योगिनामपि सर्वेषां मद्गतेनान्तरात्मना ॥
श्रद्धावान् भजते यो मां स मे युक्ततमो मतः ॥ ४८ ॥

इति श्रीभगवद्गीतायां श्रीकृष्णार्जुनसंवादे
ध्यानयोगब्रह्मप्राप्तिमार्गदर्शकरूपो नाम षष्ठोऽध्यायः ॥ ६ ॥

——:(०):——

## षष्ठाऽध्यायस्य प्रचलित

## श्री भगवद्गीतानुसारं पाठभेदाः

| पाठभेदावतरणं | | | | श्लोकांकाः |
|---|---|---|---|---|
| .... | .... | .... | .... येनात्मैवात्मना जितः | ॥ ६ |
| .... | .... | .... | .... परमात्मा समाहितः | ॥ |
| .... | .... | .... | .... तथा मानापमानयो. | ॥ ७ ॥ |
| समं कायशिरोग्रीवं धारयन्नचलं स्थिर | | | .. | ॥ |
| संप्रेक्ष्य नासिकाग्र स्वं | | .... | .... | ॥ १३ ॥ |
| .... | .... | .... | .... योगी नियतमानस | ॥ १५ |
| नात्यश्नतस्तु योगोस्ति न चैकान्तमनश्नत | | | .... | ॥ |
| न चातिस्वप्नशीलस्य जाग्रतो नैव चार्जुन | | | ... | ॥ १६ ॥ |
| .... | .. | .... | .. युंजतो योगमात्मन | ॥ १९ ॥ |
| .... | .... | .... | .. निरुद्धं योगसेवया | ॥ २० |
| सुखमात्यंतिकं यत्तद् बुद्धिग्राह्यमतन्द्रियम् | | | .... | ॥ |
| वेत्ति यत्र न चैवायं स्थितश्चलति तत्वत | | | ... | ॥ २१ ॥ |
| युञ्जन्नेवं सदात्मानं योगी विगतकल्मष | | | .... | ॥ |
| .... | .... | .... | .... योगोऽनिर्विण्णमानस. | ॥ २३ |
| सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते | | | .... | ॥ २८ ॥ |
| अयति श्रद्धयोपेतो | | .... | .... | ॥ ३७ ॥ |

॥ प्राचीनपुस्तकेऽत्र श्लोक एकोऽधिकः ॥

| | | | | |
|---|---|---|---|---|
| .... | ... | .... | .... दुर्गतिं तात गच्छति | ॥ ४० |
| .... | .. | ... | .... कुले भवति धीमता | ॥ ४२ ॥ |
| यतते च ततो भूयः संसिद्धै कुरुनंदन | | | .... | ॥ ४३ ॥ |
| .... | .... | ... | .... ह्रियते ह्यवशोऽपि सः | ॥ ४४ ॥ |
| .... | .... | .... | .... ज्ञानिभ्योपि मतोधिक | ॥ ४५ ॥ |

——:(०):——

# ॥ श्री भगवद् गीता ॥

## ॥ सप्तमोऽध्यायः ७ ॥

श्री भगवानुवाच

मय्यासक्तमनाः पार्थ योगं युञ्जन्मदाश्रितः ॥
असंशयं समग्रं मां यथा ज्ञास्यसि तच्छृणु ॥ १ ॥

ज्ञानं तेहं सविज्ञानमिदं वक्ष्याम्यशेषतः ॥
यज्ज्ञात्वा न पुनः किंचिज् ज्ञातव्यमवशिष्यते ॥ २ ॥

मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ॥
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥ ३ ॥

भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ॥
अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ ४ ॥

अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ॥
जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥ ५ ॥

एतद्योनीनि भूतानि सर्वाणीत्युपधारय ॥
अहं कृत्स्नस्य जगतः प्रलयः प्रभवस्तथा ॥ ६ ॥

मत्तः परतरं नान्यत् किंचिदस्ति धनंजय ॥
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥ ७ ॥

रसोहमप्सु कौन्तेय प्रभास्मि शशिसूर्ययोः ॥
प्रणवः सर्ववेदेषु शब्दः खे पौरुषं नृषु ॥ ८ ॥

पुण्यः पृथिव्यां गन्धोस्मि तेजश्चास्मि विभावसौ ॥
जीवनं सर्वभूतेषु तपश्चास्मि तपस्विषु ॥ ९ ॥

बीजं मां सर्वभूतानां विद्धि पार्थ सनातनम् ॥
बुद्धिर्बुद्धिमतामस्मि तेजस्तेजस्विनामहम् ॥ १० ॥

बलं बलवतां चाहं कामरागविवर्जितम् ॥
धर्माविरुद्धो भूतेषु कामोस्मि भरतर्षभ ॥ ११ ॥

ये चैव सात्त्विका भावा राजसास्तामसाश्च ये ॥
मत्त एवेति तान् विद्धि न त्वहं तेषु ते मयि ॥ १२ ॥

त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत् ॥
मोहितं नाभिजानाति मामेभ्यः परमव्ययम् ॥ १३ ॥

दैवी ह्येषा गुणमयी मम माया दुरत्यया ॥
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥ १४ ॥

न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः ॥
माययाऽपहृतज्ञाना आसुरं भावमाश्रिताः ॥ १५ ॥

चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन ॥
आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥ १६ ॥

तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ॥
प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥ १७ ॥

उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतः ॥
आस्थितः स हि युक्तात्मा मामेवाऽनुत्तमां गतिम् ॥ १८ ॥

बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते ॥
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥ १९ ॥

कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः ॥
तं तं नियममास्थाय प्रकृत्या नियताः स्वया ॥ २० ॥

यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति ॥
तस्य तस्याऽचलां श्रद्धां तामेव विदधाम्यहम् ॥ २१ ॥

स तया श्रद्धया युक्तस्तस्याराधनमीहते ॥
लभते च ततः कामान्मयैव विहितान् हितान् ॥ २२ ॥

अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम् ॥
देवान्देवयजो यान्ति सिद्धान्यान्ति सिद्धव्रताः ॥ ॥ २३ ॥
भूतान्भूतयजो यान्ति मद्भक्ता यान्ति मामपि ॥ २४ ॥

अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः ॥
परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥ २५ ॥

नाहं प्रकाशः सर्वस्य योगमायासमावृतः ॥
मूढोऽयं नाभिजानाति लोको मामजमव्ययम् ॥ २६ ॥

वेदाहं समतीतानि वर्तमानानि चार्जुन ॥
भविष्यन्ति च भूतानि मां तु वेद न कश्चन ॥ २७ ॥

इच्छाद्वेषसमुत्थेन द्वंद्वमोहेन भारत ॥
सर्वभूतानि संमोहं सर्गे यान्ति परंतप ॥ २८ ॥

येषां त्वंतं गतं पापं जनानां पुण्यकर्मणाम् ॥
ते द्वंद्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः ॥ २९ ॥

जरामरणमोक्षाय मामाश्रित्य यतन्ति ये ॥
ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म चाखिलम् ॥ ३० ॥

साधिभूताधिदैवं मां साधियज्ञं च ये विदुः ॥
प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः ॥ ३१ ॥

इति श्रीभगवद्गीतायां श्रीकृष्णार्जुनसंवादे
विज्ञानयोगो ब्रह्मप्राप्तिमार्गदर्शकयोगो नाम सप्तमोऽध्यायः ॥ ७ ॥

## सप्तमाऽध्यायस्य प्रचलित

### श्रीभगवद्गीतानुसारं पाठभेदाः

| पाठभेदावतरण | | श्लोकांकाः |
|---|---|---|
| .... | .. . योगं युञ्जन्मदाश्रय | ॥ १ |
| यज्ज्ञात्वा नेह भूयोन्यज्ज्ञातव्यमवशिष्यते | | ॥ २ ॥ |
| .... | . प्रभवः प्रलयस्तथा | ॥ ६ ॥ |
| पुण्यो गंधः पृथिव्यां च | . | ॥ ९ |
| मत्त एवेति तान्विद्धि .... | ... | ॥ १२ ॥ |
| .... | . , ज्ञानी त्वात्मैव मे मतं | ॥ १८ |

॥ २३तमे श्लोके पद्यमेकमधिकं प्राचीने ॥

| | | |
|---|---|---|
| भविष्याणि च भूतानि .... | .. . | ॥ २६ ॥ |
| येषां त्वन्तगतं पापं .... | . .. | ॥ २८ ॥ |

# ॥ श्री भगवद् गीता ॥

॥ प्राचीनहस्तलिखितपुस्तकाधारेण संशोधिता प्रचलितपाठान्तरसहिता ॥

## ॥ अष्टमोऽध्यायः ८ ॥

अर्जुन उवाच

किं तद्ब्रह्म किमध्यात्मं किं कर्म पुरुषोत्तम ॥
अधिभूतं च किं प्रोक्तमधिदैवं किमुच्यते ॥ १ ॥
अधियज्ञः कथं कोऽत्र देहेऽस्मिन्मधुसूदन ॥
प्रयाणकालेऽपि कथं ज्ञेयोऽसि नियतात्मभिः ॥ २ ॥

श्री भगवानुवाच

अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते ॥
भूतभावोद्भवकरो विसर्गः कर्मसञ्ज्ञितम् ॥ ३ ॥
अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतम् ॥
अधियज्ञोऽहमेवात्र देहे देहभृतां वर ॥ ४ ॥
अन्तकाले च मामेव स्मरन्मुक्त्वा कलेवरम् ॥
यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः ॥ ५ ॥
यं यं वाऽपि स्मरन्भावं त्यजत्यन्ते कलेवरम् ॥
तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥ ६ ॥
तस्मात्सर्वेषु कालेषु मामनुस्मर युध्य च ॥
मय्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयम् ॥ ७ ॥
अभ्यासयोगयुक्तेन चेतसा नान्यगामिना ॥
परमं पुरुषं दिव्यं याति पार्थानुचिन्तयन् ॥ ८ ॥
कविं पुराणमनुशासितारमणोरणीयांसमनुस्मरेद्यः ॥
सर्वस्य धातारमचिन्त्यरूपमादित्यवर्णं तमसः परस्तात् ॥ ९ ॥
प्रयाणकाले मनसाऽचलेन भक्त्या युक्तो योगबलेन चैव ॥
भ्रुवोर्मध्ये प्राणमावेश्य सम्यक् स तं परं पुरुषमुपैति दिव्यम् ॥१०॥
यदक्षरं वेदविदो वदन्ति विशन्ति यद्यतयो वीतरागाः ॥
यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेणाऽभिधास्ये ॥ ११ ॥

सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च ॥
मूर्ध्न्याधायात्मनः प्राणमास्थितो योगधारणाम् ॥ १२ ॥
ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् ॥
यः प्रयाति त्यजन्देहं स याति परमां गतिं ॥ १३ ॥
अनन्यचेताः सततं यो मां स्मरति नित्यशः ॥
तस्याहं सुलभः पार्थ नित्ययुक्तस्य देहिनः ॥ १४ ॥
मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ॥
नाप्नुवन्ति महात्मनः संसिद्धिं परमां गताः ॥ १५ ॥
आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ॥
मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥ १६ ॥
सहस्रयुगपर्यन्तमहर्यद्ब्रह्मणो विदुः ॥
रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः ॥ ॥ १७ ॥
अव्यक्ताद् व्यक्तयः सर्वाः प्रभवंत्यहरागमे ॥
रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके ॥ १८ ॥
भूतग्रामः स एवायं भूत्वा भूत्वा प्रलीयते ॥
रात्र्यागमेऽवशः पार्थ प्रभवत्यहरागमे ॥ १९ ॥
परस्तस्मात्तु भावोऽन्यो व्यक्तोऽव्यक्तः सनातनः ॥
यः स सर्वेषु भूतेषु नश्यत्सु न विनश्यति ॥ २० ॥
अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिं ॥
यं प्राप्य न निवर्तन्ते तद्धाम परमं मम ॥ २१ ॥
पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ॥
यं प्राप्य न पुनर्जन्म लभन्ते योगिनोर्जुन ॥ २२ ॥
यस्यान्तःस्थानि भूतानि यत्र सर्वं प्रतिष्ठितम् ॥ २३ ॥
यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः ॥
प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ ॥ २४ ॥
अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ॥
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥ २५ ॥
धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् ॥

तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥ २६ ॥

शुक्लकृष्णगती ह्येते जगतः शाश्वते मते ॥
अनयोर्यात्यनावृत्तिमेकयाऽऽवर्ततेऽन्यया ॥ २७ ॥

नैते सृती पार्थ जानन् योगी मुह्यति कश्चन ॥
तस्मात्सर्वेषु कालेषु योगयुक्तो भवार्जुन ॥ २८ ॥

वेदेषु यज्ञेषु तपःसु चैव दानेषु यत्पुण्यफलं प्रदिष्टम् ॥
अत्येति तत्सर्वमिदं विदित्वा योगी परं स्थानमुपैति चाद्यम् ॥२९॥

इति श्रीभगवद्गीतायां श्रीकृष्णार्जुनसंवादे-
अक्षरब्रह्मयोगज्ञानेन परमगतिप्राप्तिनिरूपणं नामाऽष्टमोऽध्यायः ॥ ८ ॥

—:o:—

## अष्टमाध्यायस्य प्रचलित

### श्री भगवद्गीतानुसारं पाठभेदाः

| पाठभेदावतरणं | | | श्लोकांकाः |
|---|---|---|---|
| प्रयाण काले च कथं .... | | .... | ॥ २ ॥ |
| .... | .... | .... मामेवैष्यस्यसंशयः | ॥ ७ ॥ |
| भक्त्या युक्तो योगबलेन चैव | | .... | ॥ १० |
| तत्ते पदं संग्रहेण प्रवक्ष्ये | | .... | ॥ ११ ॥ |
| .... | .... | .... नित्ययुक्तस्य योगिनः | ॥ १४ ॥ |
| .... | .... | .... अहर्यद् ब्रह्मणो विदुः | ॥ १७ |
| परस्तस्मात्तु भावोऽन्योऽव्यक्तोऽव्यक्तात्सनातनः | | .... | ॥ २० |
| यस्यांतःस्थानि भूतानि येन सर्वमिदं ततम् | | ... | ॥ २२ |

॥ अस्मिन् २२ श्लोके पद्यमेकमधिकं प्राचीने ॥

| | | | |
|---|---|---|---|
| एकया यात्यनावृत्तिमन्ययाऽऽवर्तते पुनः | | .... | ॥ २६ ॥ |

—:(o):—

# ॥ श्री भगवद् गीता ॥

॥ प्राचीनहस्तलिखितपुस्तकाधारेण संशोधिता प्रचलितपाठांतरसहिता ॥

## ॥ नवमोऽध्यायः ९ ॥

श्री भगवानुवाच

इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे ॥
ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ १ ॥
राजविद्या राजगुह्यं पवित्रमिदमुत्तमम् ॥
प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम् ॥ २ ॥
अश्रद्दधानाः पुरुषा धर्मस्यास्य परंतप ॥
अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि ॥ ३ ॥
मया ततमिदं सर्वं जगदव्यक्तमूर्तिना ॥
मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ॥ ४ ॥
न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ॥
भूतभृन्न च भूतस्थो ममात्मा भूतभावनः ॥ ५ ॥
यथाऽऽकाशस्थितो नित्यं वायुः सर्वत्रगो महान् ॥
तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय ॥ ६ ॥
एवं हि सर्वभूतेषु चराम्यनभिलक्षितः ॥
भूतप्रकृतिमास्थाय सह चैव विनैव च ॥ ७ ॥
सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामकीम् ॥
कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥ ८ ॥
प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः ॥
भूतग्राममिदं कृत्स्नमवशं प्रकृतेर्वशात् ॥ ९ ॥
न च मां तानि कर्माणि निबध्नंति धनञ्जय ॥
उदासीनवदासीनमसक्तं तेषु कर्मसु ॥ १० ॥
मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम् ॥
हेतुनाऽनेन कौन्तेय जगद्विपरिवर्तते ॥ ११ ॥
अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् ॥

परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥ १२ ॥
मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ॥
आसुरीं राक्षसीं चैव प्रकृतिं मोहिनीं श्रिताः ॥ १३ ॥
महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ॥
भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥ १४ ॥
सततं कीर्तयन्तश्च यजन्तश्च दृढव्रताः ॥
नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ॥ १५ ॥
ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते ॥
एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम् ॥ १६ ॥
अहं क्रतुरहं यज्ञः स्वधाऽहमहमौषधम् ॥
मन्त्रोऽहमहमेवाज्यमहमग्निरहं हुतम ॥ १७ ॥
पिताऽहमस्य जगतो माता धाता पितामहः ॥
वेद्यं पवित्रमोङ्कारोऽथर्व ऋक् साम वै यजुः ॥ १८ ॥
गतिर्भर्ता प्रभुः साक्षी निवासः शरणं सुहृत् ॥
प्रभवः प्रलयः स्थानं निधानं बीजमव्ययम् ॥ १९ ॥
तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च ॥
अमृतं चैव मृत्युश्च सदसच्चाहमर्जुन ॥ २० ॥
त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते ॥
ते पुण्यमासाद्य सुरेन्द्रलोकमश्नन्ति दिव्यान्दिवि देवभोगान् ॥२१॥
ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति ॥
एवं त्रयीधर्ममनुप्रपन्ना गतागतं कामकामा लभन्ते ॥ २२ ॥
अनन्याश्च विरक्ता मां ये जनाः पर्युपासते ॥
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥ २३ ॥
येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयाऽन्विताः ॥
तेऽपि मामेव कौन्तेय यजन्ते विधिपूर्वकम् ॥ २४ ॥
अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ॥
न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥ २५ ॥
यान्ति देवव्रता देवान् पितॄन्यान्ति पितृव्रताः ॥

भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोऽपि माम् ॥ २६ ॥
पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥ २७ ॥
यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ॥
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥ २८ ॥
शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः ॥
संन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि ॥ २९ ॥
समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः ॥
ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम् ॥ ३० ॥
अपि चेत्सुदुराचारो भजते मामनन्यभाक् ॥
साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥ ३१ ॥
क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति ॥
कौन्तेय प्रतिजानीहि न मद् भक्तः प्रणश्यति ॥ ३२ ॥
मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः ॥
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ॥ ३३ ॥
किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा ॥
अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम् ॥ ३४ ॥
मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ॥
मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥ ३५ ॥

इति श्री भगवद्गीतायां श्रीकृष्णार्जुनसंवादे
राजविद्याराजगुह्ययोगो नाम नवमोध्याय ॥ ९ ॥

# नवमाऽध्यायस्य प्रचलित

## श्री भगवद्गीतानुसारं पाठभेदाः

श्लोकांकाः

६–७–षष्ठसप्तमश्लोकयोर्मध्ये एकः श्लोकोऽधिकः प्राचीने

| | | | | |
|---|---|---|---|---|
| .... | .... | .... | ... प्रकृतिं यांति मामिकां | ॥ ७ ॥ |
| भूतग्राममिमं कृत्स्न | .... | .... | | ॥ ८ ॥ |
| अवजानन्ति मां मूढा मानुषीं तनुमाश्रितं | | .... | | |
| परंभावमजानन्तो मम भूतमहेश्वरम् | | .... | | ॥ ११ ॥ |
| राक्षसीं आसुरीं चैव | | .... | | ॥ १२ ॥ |
| सततं कीर्तयन्तो मां यतन्तश्च दृढव्रता. | | .... | | ॥ १४ |
| वेद्यं पवित्रमोंकार ऋक्साम यजुरेव च | | .... | | ॥ १७ ॥ |
| अनन्याश्चितयंतो मां | | .... | | ॥ २२ |
| .... | .... | .... | .. . यजन्त्यविधिपूर्वकम् | ॥ २३ |
| .... | .... | .... | .... न मे भक्तः प्रणश्यति | ॥ ३१ ॥ |

——:(०):——

# ॥ श्री भगवद् गीता ॥

॥ प्राचीनहस्तलिखितपुस्तकाधारेण संशोधिता प्रचलितपाठांतरसहिता ॥

## ॥ दशमोऽध्यायः १० ॥

श्री भगवानुवाच

भूय एव महाबाहो श‍ृणु मे परमं वचः ॥
यत्तेऽहं प्रीयमाणाय वक्ष्यामि हितकाम्यया ॥ १ ॥

न मे विदुः सुरगणाः प्रभवं न महर्षयः ॥
अहमादिर्हि देवानां महर्षीणां च सर्वशः ॥ २ ॥

यो मामजमनादिं च वेत्ति लोकमहेश्वरम् ॥
असंमूढः स मर्त्येषु सर्वपापैः प्रमुच्यते ॥ ३ ॥

बुद्धिर्ज्ञानमसंमोहः क्षमा सत्यं दमः शमः ॥
सुखं दुःखं भवो भावो भयं चाभयमेव च ॥ ४ ॥

अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः ॥
भवन्ति भावा भूतानां मत्त एव पृथग्विधाः ॥ ५ ॥

महर्षयः सप्त पूर्वे चत्वारो मनवस्तथा ॥
मद्भावा मानसा जाता येषां लोक इमाः प्रजाः ॥ ६ ॥

एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः ॥
सोऽविकम्पेन योगेन युज्यते नात्र संशयः ॥ ७ ॥

अयं सर्वस्य प्रभव इतः सर्वं प्रवर्तते ॥
इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥ ८ ॥

मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् ॥
कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च ॥ ९ ॥

तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ॥
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥ १० ॥

तेषामेवानुकंपार्थमहमज्ञानजं तमः ॥
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥ ११ ॥

अर्जुन उवाच

परं ब्रह्म परं धाम पवित्रं परमं भवान् ॥
पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम् ॥ १२ ॥
आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा ॥
असितो देवलो व्यासः स्वयं चैव ब्रवीषि माम् ॥ १३ ॥
सर्वमेतदृतं मन्ये यन्मां वदसि केशव ॥
न हि ते भगवन् व्यक्तिं विदुर्देवा महर्षयः ॥ १४ ॥
स्वयमेवात्मनाऽऽत्मानं वेत्थ त्वं पुरुषोत्तम ॥
भूतभावन भूतेश देवदेव जगत्पते ॥ १५ ॥
वक्तुमर्हस्यशेषेण विभूतीरात्मनः शुभाः ॥
याभिर्विभूतिभिर्लोकानिमांस्त्वं व्याप्य तिष्ठसि ॥ १६ ॥
कथं विद्यामहं योगिंस्त्वामहं परिचिन्तयन् ॥
केषु केषु च भावेषु चिन्त्योऽसि भगवन्मया ॥ १७ ॥
विस्तरेणात्मनो योगं विभूतिं च जनार्दन ॥
भूयः कथय तृप्तिर्हि शृण्वतो नास्ति मेऽमृतम् ॥ १८ ॥

श्री भगवानुवाच

हन्त ते कथयिष्यामि विभूतीरात्मनः शुभाः ॥
प्राधान्यतः कुरुश्रेष्ठ नास्त्यन्तो विस्तरस्य मे ॥ १९ ॥
अहमात्मा गुडाकेश सर्वभूताशयस्थितः ॥
अहमादिश्च मध्यं च भूतानामन्त एव च ॥ २० ॥
आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान् ॥
मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी ॥ २१ ॥
वेदानां सामवेदोऽहं देवानामस्मि वासवः ॥
इन्द्रियाणां मनश्चास्मि भूतानामस्मि चेतना ॥ २२ ॥
रुद्राणां शङ्करश्चास्मि वित्तेशो यक्षरक्षसाम् ॥
वसूनां पावकश्चास्मि मेरुः शिखरिणामहम् ॥ २३ ॥
पुरोधसां च मुख्यं मां विद्धि पार्थ बृहस्पतिं ॥
सेनानीनामहं स्कंदः सरसामस्मि सागरः ॥ २४ ॥

महर्षीणां भृगुरहं गिरामप्येकमक्षरम् ॥
यज्ञानां जपयज्ञोऽहं स्थावराणां हिमालयः ॥ ॥ २५ ॥

अश्वत्थः सर्ववृक्षाणां देवर्षीणां च नारदः ॥
गन्धर्वाणां चित्ररथः सिद्धानां कपिलो मुनिः ॥ २६ ॥

उच्चैःश्रवसमश्वानां विद्धि माममृतोद्भवम् ॥
ऐरावणं गजेन्द्राणां नराणां च नराधिपम् ॥ २७ ॥

आयुधानामहं वज्रं धेनूनामस्मि कामधुक् ॥
प्रजनश्चास्मि कन्दर्पः सर्पाणामस्मि वासुकिः ॥ २८ ॥

अनन्तश्चास्मि नागानां वरुणो यादसामहम् ॥
पितॄणामर्यमा चास्मि यमः संयमतामहम् ॥ २९ ॥

प्रह्लादश्चास्मि दैत्यानां कालः कलयतामहम् ॥
मृगाणां च मृगेन्द्रोऽहं वैनतेयश्च पक्षिणाम् ॥ ३० ॥

पवनः पवतामस्मि रामः शस्त्रभृतामहम् ॥
झषाणां मकरश्चास्मि स्रोतसामस्मि जान्हवी ॥ ३१ ॥

सर्गाणामादिरन्तश्च मध्यं चैवाहमर्जुन ॥
अध्यात्मविद्या विद्यानां वादः प्रवदतामहम् ॥ ३२ ॥

अक्षराणामकारोऽस्मि द्वंद्वः सामासिकस्य च ॥
अहमेवाक्षयः कालो धाताऽहं विश्वतोमुखः ॥ ३३ ॥

मृत्युः सर्वहरश्चाहमुद्भवश्च भविष्यताम् ॥
कीर्तिः श्रीर्वाक् च नारीणां स्मृतिर्मेधा धृतिः क्षमा ॥ ३४ ॥

बृहत्साम तथा साम्नां गायत्री छन्दसामहम् ॥
मासानां मार्गशीर्षोऽहमृतूनां कुसुमाकरः ॥ ३५ ॥

द्यूतं छलयतामस्मि तेजस्तेजस्विनामहम् ॥
जयोऽस्मि व्यवसायोऽस्मि सत्त्वं सत्त्ववतामहम् ॥ ३६ ॥

वृष्णीनां वासुदेवोऽस्मि पाण्डवानां धनञ्जयः ॥
मुनीनामप्यहं व्यासः कवीनामुशना कविः ॥ ३७ ॥

दण्डो दमयतामस्मि नीतिरस्मि जिगीषताम् ॥
मौनं चैवास्मि गुह्यानां ज्ञानं ज्ञानवतामहम् ॥ ३८ ॥

यच्चापि सर्वभूतानां बीजं तदहमर्जुन ॥
न तदस्ति विना यत्स्यान्मया भूतं चराचरम् ॥ ३९ ॥
नान्तोऽस्ति शुभदिव्यानां विभूतीनां परन्तप ॥
एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया ॥ ४० ॥
यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ॥
तत्तदेवावगच्छेस्त्वं मम तेजोंऽशसंभवम् ॥ ४१ ॥
अथवा बहुनोक्तेन किं ज्ञानेन तवार्जुन ॥
विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥ ॥ ४२ ॥

इति श्रीभगवद्गीतायां श्रीकृष्णार्जुनसंवादे
शुभदिव्यविभूतियोगो नाम दशमोऽध्यायः ॥ १० ॥

——:(०):——

## दशमाध्यायस्य प्रचलित
### श्री भगवद्गीतानुसारं पाठभेदाः

| | | श्लोकांकाः |
|---|---|---|
| अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते | .... | ॥ ८ |
| .... .... | .... स्वयं चैव ब्रवीषिमाम् | ॥ १३ ॥ |
| .... .... | .... विदुर्देवा न दानवाः | ॥ १४ ॥ |
| वक्तुमर्हस्यशेषेण दिव्या ह्यात्मविभूतयः | ... | ॥ १६ |
| .... .... | .... त्वां सदा परिचिन्तयन् | ॥ १७ |
| .... .... | .... दिव्या ह्यात्मविभूतयः | ॥ १९ |
| वेदानां सामवेदोऽस्मि .... | .... | ॥ २२ |
| महर्षीणां भृगुरहं गिरामस्म्येकमक्षरम् | .... | ॥ |
| यज्ञानां जपयज्ञोऽस्मि .... | .... | ॥ २५ ॥ |
| ऐरावतं गजेन्द्राणां .... | .... | ॥ २७ ॥ |
| अथवा बहुनैतेन किं ज्ञातेन तवार्जुन | .... | ॥ ४२ ॥ |

# ॥ श्री भगवद् गीता ॥

॥ प्राचीनहस्तलिखितपुस्तकाधारेण संशोधिता प्रचलितपाठान्तरसहिता ॥

## ॥ एकादशोऽध्यायः ११ ॥

अर्जुन उवाच

मदनुग्रहाय परमं गुह्यमध्यात्मसञ्ज्ञितम् ॥
यत्त्वयोक्तं वचस्तेन मोहोऽयं विगतो मम ॥ १ ॥
भवाप्ययौ हि भूतानां श्रुतौ विस्तरशो मया
त्वत्तः कमलपत्राक्ष माहात्म्यमपि चाव्ययम् ॥ २ ॥
एवमेतद्यथाऽऽत्थ त्वमात्मानं परमेश्वर ॥
द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम ॥ ३ ॥
मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो ॥
योगीश्वर ततो मे त्वं दर्शयात्मानमव्ययम् ॥ ४ ॥

श्री भगवानुवाच

पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः ॥
नानाविधानि दिव्यानि नानावर्णाकृतीनि च ॥ ५ ॥
पश्यादित्यान् वसून् रुद्रानश्विनौ मरुतस्तथा ॥
बहून्यदृष्टपूर्वाणि पश्याश्चर्याणि पाण्डव ॥ ६ ॥
इहैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरम् ॥
मम देहे गुडाकेश यच्चान्यद् द्रष्टुमिच्छसि ॥ ७ ॥
न तु मां शक्यसि द्रष्टुमनेनैव स्वचक्षुषा ॥
दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ॥ ८ ॥

सञ्जय उवाच

एवमुक्त्वा ततो राजन् महायोगीश्वरो हरिः ।
दर्शयामास पार्थाय परमं रूपमैश्वरम् ॥ ९ ॥
अनेकवक्त्रनयनमनेकाद्भुतदर्शनम् ॥
अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम् ॥ १० ॥

दिव्यमाल्यांबरधरं दिव्यगन्धानुलेपनम् ॥
सर्वाश्चर्यमयं देवमनन्तं विश्वतोमुखम् ॥ ११ ॥
दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता ॥
यदि भाः सदृशी सा स्याद्भासस्तस्य महात्मनः ॥ १२ ॥
तत्रैकस्थं जगत्कृत्स्नं प्रविभक्तमनेकधा ॥
अपश्यद्देवदेवस्य शरीरे पाण्डवस्तदा ॥ १३ ॥
ततः स विस्मयाविष्टो हृष्टरोमा धनञ्जयः ॥
प्रणम्य शिरसा देवं कृताञ्जलिरभाषत ॥ १४ ॥

अर्जुन उवाच

पश्यामि देवांस्तव देव देहे सर्वांस्तथा भूतविशेषसङ्घान् ॥
ब्रह्माणमीशं कमलासनस्थमृषींश्च सर्वानुरगांश्च दिव्यान् ॥ १५ ॥
अनेकबाहूदरवक्त्रनेत्रं पश्यामि त्वां सर्वतोऽनन्तरूपम् ॥
नान्तं न मध्यं न पुनस्तवादिं पश्यामि विश्वेश्वर विश्वरूपम् ॥ १६ ॥
किरीटिनं गदिनं चक्रिणं च तेजोराशिं सर्वतो दीप्तिमन्तम् ॥
पश्यामि त्वां दुर्निरीक्ष्यं समन्ताद्दीप्तानलार्कद्युतिमप्रमेयम् ॥ १७ ॥
त्वमक्षरं परमं वेदितव्यं त्वमस्य विश्वस्य परं निधानम् ॥
त्वमव्ययः शाश्वतधर्मगोप्ता सनातनस्त्वं पुरुषो मतो मे ॥ १८ ॥
अनादिमध्यान्तमनन्तवीर्यमनन्तबाहुं शशिसूर्यनेत्रम् ॥
पश्यामि त्वां दीप्तहुताशवक्त्रं स्वतेजसा विश्वमिदं तपन्तम् ॥ १९ ॥
द्यावापृथिव्योरिदमन्तरं हि व्याप्तं त्वयैकेन दिशश्च सर्वाः ॥
दृष्ट्वाऽद्भुतं रूपमुग्रं तवेदं लोकत्रयं प्रव्यथितं महात्मन् ॥ २० ॥
अमी हि त्वां सुरसङ्घा विशन्ति केचिद्भीताः प्राञ्जलयो गृणन्ति ॥
स्वस्तीति चोक्त्वा महर्षिसिद्धसङ्घाः स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः २१
रुद्रादित्या वसवो ये च साध्या विश्वेऽश्विनौ मरुतश्चोष्मपाश्च ॥
गन्धर्वयक्षासुरसिद्धसङ्घा वीक्षन्ते त्वां विस्मिताश्चैव सर्वे ॥ २२ ॥
रूपं महत्ते बहुवक्त्रनेत्रं महाबाहो बहुबाहूरुपादम् ॥
बहूदरं बहुदंष्ट्राकरालं दृष्ट्वा लोकाः प्रव्यथितास्तथाहम् ॥ २३ ॥
नभःस्पृशं दीप्तमनेकवर्णं व्यात्ताननं दीप्तविशालनेत्रम् ॥

दृष्ट्वा हि त्वा प्रव्यथितान्तरात्मा धृतिं न विन्दामि शमं च विष्णो २४
दंष्ट्राकरालानि च ते मुखानि दृष्ट्वैव कालानलसन्निभानि ॥
दिशो न जाने न लभे च शर्म प्रसीद देवेश जगन्निवास ॥ २५ ॥
अमी सर्वे धृतराष्ट्रस्य पुत्राः सर्वैः सहैवावनिपालसङ्घैः ॥
भीष्मो द्रोणः सूतपुत्रस्तथाऽसौ सहास्मदीयैरपि योधमुख्यैः ॥ २६ ॥
वक्त्राणि ते त्वरमाणा विशन्ति दंष्ट्राकरालानि भयानकानि ॥
केचिद्विलग्ना दशनान्तरेषु संदृश्यन्ते चूर्णितैरुत्तमाङ्गैः ॥ २७ ॥
नानारूपैः पुरुषैर्वध्यमाना विशंति ते वक्त्रमचिन्त्यरूपम् ॥
यौधिष्ठिरा धार्तराष्ट्राश्च योधाः शस्त्रैः कृत्ता विविधैः सर्व एव ॥२८॥
त्वत्तेजसा विहता नूनमेव तथा हीमे त्वच्छरीरप्रविष्टाः ॥ २९ ॥
यथा नदीनां बहवोऽम्बुवेगाः समुद्रमेवाभिमुखा द्रवन्ति ॥
तथा तवामी नरलोकवीरा विशन्ति वक्त्राण्यभितो ज्वलन्ति ॥३०॥
यथा प्रदीप्तं ज्वलनं पतङ्गा विशन्ति नाशाय समृद्धवेगाः ॥
तथैव नाशाय विशन्ति लोकास्तवापि वक्त्राणि समृद्धवेगाः ॥३१॥
लेलिह्यसे ग्रसमानः समन्ताल्लोकान् समग्रान् वदनैर्ज्वलद्भिः ॥
तेजोभिरापूर्य जगत्समग्रं भासस्तवोग्राः प्रतपन्ति विष्णोः ॥ ३२ ॥
आख्याहि मे को भवानुग्ररूपो नमोऽस्तु ते देववर प्रसीद ॥
विज्ञातुमिच्छामि भवन्तमाद्यं न हि प्रजानामि तव प्रवृत्तिम् ॥३३॥

श्री भगवानुवाच

कालोऽस्मि लोकक्षयकृत् प्रवृद्धो लोकान् समाहर्तुमिह प्रवृत्तः ॥
ऋतेऽपि त्वा न भविष्यन्ति सर्वे येऽवस्थिताः प्रत्यनीकेषु योधाः॥३४॥
तस्मात्त्वमुत्तिष्ठ यशो लभस्व जित्वा शत्रून् भुङ्क्ष्व राज्यं समृद्धम् ॥
मयैवैते निहताः पूर्वमेव निमित्तमात्रं भव सव्यसाचिन् ॥ ३५ ॥
द्रोणं च भीष्मं च जयद्रथं च कर्णं तथान्यानपि वीरयोधान् ॥
मया हतांस्त्वं जहि मा व्यथिष्ठा युद्धस्व जेतासि रणे सपत्नान् ३६

सञ्जय उवाच

एतच्छ्रुत्वा वचनं केशवस्य कृताञ्जलिर्वेपमानः किरीटी ॥
भूय एवाह कृष्णं सगद्गदं भीतभीतः प्रणम्य ॥ ३७ ॥

अर्जुन उवाच

स्थाने हृषीकेश तव प्रकीर्त्या जगत् प्रहृष्यत्यनुरज्यते च ॥
रक्षांसि भीतानि दिशो द्रवन्ति सर्वे नमस्यन्ति च सिद्धसङ्घाः ३८

कस्माच्च ते न नमेयुर्महात्मन् गरीयसे ब्रह्मणोऽप्यादिकर्त्रे ॥
अनन्त देवेश जगन्निवास त्वमक्षरं सदसत्तत्परं यत् ॥ ३९ ॥

त्वमादिदेवः पुरुषः पुराणस्त्वमस्य विश्वस्य परं निधानम् ॥
वेत्तासि वेद्यं परमं च धाम त्वया ततं विश्वमनन्तरूप ॥ ४० ॥

वायुर्यमोऽग्निर्वरुणः शशाङ्कः प्रजापतिस्त्वं प्रपितामहश्च ॥
अनादिमानप्रतिमप्रभावः सर्वेश्वरः सर्वमहाविभूते ॥ ४१ ॥

नमो नमस्तेऽस्तु सहस्रकृत्वः पुनश्च भूयोऽपि नमो नमस्ते ॥
नमः पुरस्तादथ पृष्ठतस्ते नमोऽस्तु ते सर्वत एव सर्व ॥ ४२ ॥

नहि त्वदन्यः कश्चिदस्तीह देव लोकत्रये दृश्यतेऽचिन्त्यकर्मा ॥
अनन्तवीर्यामितविक्रमस्त्वं सर्वं समाप्नोषि ततोऽसि सर्वः ॥ ४३ ॥

सखेति मत्वा प्रसभं यदुक्तं हे कृष्ण हे यादव हे सखेति ॥
अजानता महिमानं तवेमं मया प्रमादात् प्रणयेन वाऽपि ॥ ४४ ॥

यच्चावहासार्थमसत्कृतोऽसि विहारशय्यासनभोजनेषु ॥
एकोऽथवाऽप्यच्युत तत्समक्षं तत्क्षामये त्वामहमप्रमेयम् ॥ ४५ ॥

पिताऽसि लोकस्य चराचरस्य त्वमस्य पूज्यश्च गुरुर्गरीयान् ॥
न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो लोकत्रयेऽप्यप्रतिमप्रभावः ॥४६॥

तस्मात् प्रणम्य प्रणिधाय कायं प्रसादये त्वामहमीशमीड्यम् ॥
पितेव पुत्रस्य सखेव सख्युः प्रियः प्रियस्यार्हसि देव सोढुम् ॥४७॥

दिव्यानि कर्माणि तवाद्भुतानि पूर्वाणि पूर्वे ऋषयः स्मरन्ति ॥
नान्योऽस्ति कर्ता जगतस्त्वमेको धाता विधाता च विभुर्भवश्च ॥४८॥

तवाद्भुतं किं नु भवेदसह्यं किं वा शक्यं परतः कीर्तयिष्ये ॥
कर्तासि सर्वस्य यतः स्वयं वै विभो ततः सर्वमिदं त्वमेव ॥४९॥

अत्यद्भुतं कर्म न दुष्करं ते कर्मोपमानं न हि विद्यते ते ॥
न ते गुणानां परिमाणमस्ति न तेजसो नापि बलस्य नर्द्धेः ॥५०॥

अदृष्टपूर्वं हृषितोऽस्मि दृष्ट्वा भयेन च प्रव्यथितं मनो मे ॥

तदेव मे दर्शय देव रूपं प्रसीद देवेश जगन्निवास ॥ ४५ ॥
किरीटिनं गदिनं चक्रहस्तमिच्छामि त्वां द्रष्टुमहं तथैव ॥
तेनैव रूपेण भुजद्वयेन सहस्रबाहो भव विश्वमूर्ते ॥ ४६ ॥

श्री भगवानुवाच

मया प्रसन्नेन तवार्जुनेदं रूपं परं दर्शितमात्मयोगात् ॥
तेजोमयं विश्वमनन्तमाद्यं यन्मे त्वदन्येन न दृष्टपूर्वम् ॥ ४७ ॥
न वेदयज्ञाध्ययनैर्न दानैर्न च क्रियाभिर्न तपोभिरुग्रैः ॥
एवंरूपः शक्यमहं नृलोके द्रष्टुं त्वदन्येन कुरुप्रवीर ॥ ४८ ॥
मा ते व्यथा मा च विमूढभावो दृष्ट्वा रूपं घोरमीदृङ्ममेदम् ॥
व्यपेतभीः प्रीतमनाः पुनस्त्वं तदेव मे रूपमिदं प्रपश्य ॥ ४९ ॥

संजय उवाच

इत्यर्जुनं वासुदेवस्तथोक्त्वा स्वकं रूपं दर्शयामास भूयः ॥
आश्वासयामास च भीतमेनं भूत्वा पुनः सौम्यवपुर्महात्मा ॥ ५० ॥

अर्जुन उवाच

दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्दन ॥
इदानीमस्मि संवृत्तः सचेताः प्रकृतिं गतः ॥ ५१ ॥

श्री भगवानुवाच

सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम ॥
देवा अप्यस्य रूपस्य नित्यं दर्शनकांक्षिणः ॥ ५२ ॥
नाहं वेदैर्न तपसा न दानेन न चेज्यया ॥
शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥ ५३ ॥
भक्त्या त्वनन्यया शक्यो ह्यहमेवंविधोऽर्जुन ॥
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप ॥ ५४ ॥
मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः ॥
निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव ॥ ५५ ॥

इति श्रीमगवद्गीतायां श्रीकृष्णार्जुनसंवादे
विश्वरूपदर्शनं नाम एकादशोऽध्यायः ॥ ११ ॥

———:(०):———

44167

## एकादशाध्यायस्य प्रचलित
### श्री भगवद्गीतानुसारं पाठभेदाः

| पाठभेदावतरणं | | श्लोकांकाः |
|---|---|---|
| योगेश्वर ततो मे त्वं | .... | ॥ ४ ॥ |
| .... | .... महायोगेश्वरो हरिः | ॥ ९ |
| दिव्यमाल्यांबरधरं | .... | ॥ ११ |
| नान्तं न मध्यं न पुनस्तवादिं पश्यामि विश्वेश्वर विश्वरूप | | ॥ १६ ॥ |
| दृष्ट्वाद्भुतं रूपमुग्रं तवेदं.... | .... | ॥ २० ॥ |
| अमी हि त्वाऽसुरसंघा विशंति.... | .. | ॥ |
| स्वस्तीत्युक्त्वा महर्षिसिद्धसंघाः | .... | ॥ २१ ॥ |
| अमी च त्वां धृतराष्ट्रस्य पुत्राः सर्वे सहैवाऽवनिपालमुख्यैः | | ॥ २६ |

॥ २७ श्लोकानंतरं सार्धकश्लोकोधिकः प्राचीने ॥

| | | |
|---|---|---|
| विशन्ति वक्त्राण्यभिविज्वलन्ति | ... | ॥ २८ ॥ |
| कर्णं तथान्यानपि योधवीरान् | .... | ॥ ३४ |
| कस्माच्च ते न नमेरन्महात्मन् | .... | ॥ ३७ |
| वेत्तासि वेद्यं च परं च धाम | .... | ॥ ३८ ॥ |

३९ श्लोके प्रपितामहश्च एतदनंतरं प्राचीने
अधिकार्धश्लोकेन ३९ तमश्लोकपूर्तिरस्ति
पुनश्च नमोनमस्तेस्तु सहस्रकृत्व इत्यारभ्य नमोस्तु ते सर्वत
एव सर्व इत्यत्राप्यर्धः श्लोकोऽधिकः प्राचीने ।

| | | |
|---|---|---|
| .... | .... | .... सर्वं समाप्नोषि ततोसि सर्वं ॥ ४० ॥ |
| अजानता महिमानं तवेदं | .. | |
| .... | .... | .... त्वमस्य पूज्यश्च गुरुर्गरीयान् ॥ ४३ |
| .. | .... | .... प्रिय प्रियायार्हसि देव सोढुं ॥ ४४ ॥ |

प्राचीने ४४ श्लोकानंतरं त्रयः श्लोकाश्चाधिकाः

| | | |
|---|---|---|
| तेनैव रूपेण चतुर्भुजेन | .... | ॥ ४६ ॥ |
| एवंरूप शक्य अह नृलोके | .... | ॥ ४८ ॥ |
| भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन | .... | ॥ ५४ ॥ |

——:(०):——

# ॥ श्री भगवद् गीता ॥

॥ प्राचीनहस्तलिखितपुस्तकाधारेण संशोधिता प्रचलितपाठांतरसहिता ॥

## ॥ द्वादशोऽध्यायः १२ ॥

अर्जुन उवाच ।

एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते ॥
ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ॥ १ ॥

श्रीभगवानुवाच

मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ॥
श्रद्धया परयोपेतास्ते मे युक्तमता मताः ॥ २ ॥
ये त्वक्षरमनिर्देश्यमव्यक्तं मामुपासते ॥
सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ॥ ३ ॥
सन्नियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः ॥
ते प्राप्नुवंति मामेव सर्वभूतहिते रताः ॥ ४ ॥
क्लेशोऽधिकतरस्तेषां सर्वत्राऽव्यक्तचेतसाम् ॥
अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥ ५ ॥
ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः ॥
अनन्येनैव योगेन मां ध्यायन्त उपासते ॥ ६ ॥
तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ॥
भवामि न चिरात्पार्थ मय्यावेशितचेतसाम् ॥ ७ ॥
मय्येव मन आधत्स्व मयि बुद्धिं निवेशय ॥
निवसिष्यसि मय्येव योगमुत्तममास्थितः ॥ ८ ॥
अथावेशयितुं चित्तं न शक्नोषि मयि स्थिरम् ॥
अभ्यासयोगेन ततो मामिच्छाप्तुं धनञ्जय ॥ ९ ॥
अभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भव ॥
मदर्थमपि कर्माणि कुर्वन्सिद्धिमवाप्स्यसि ॥ १० ॥
अथैतदप्यशक्तोऽसि कर्तुं मद्योगमास्थितः ॥
सर्वकर्मफलत्यागं ततः कुरु यतात्मवान् ॥ ११ ॥

श्रेयो हि ज्ञानमभ्यासाज्ज्ञानाद्ध्यानं विशिष्यते ॥
ध्यानात्कर्मफलत्यागस्त्यागाच्छान्तिर्निरंतरा ॥ १२ ॥
अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च ॥
निर्ममो निरहंकारः समदुःखसुखः क्षमी ॥ १३ ॥
संतुष्टः सततं योगी यतात्मा दृढनिश्चयः ॥
मय्यर्पितमनोबुद्धिर्यो मे भक्तः स मे प्रियः ॥ १४ ॥
यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ॥
हर्षमन्युभयक्रोधैर्मुक्तो यः स च मे प्रियः ॥ १५ ॥
अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः ॥
सर्वारंभफलत्यागी यो मद्भक्तः स मे प्रियः ॥ १६ ॥
यो न हृष्यति न द्वेष्टि न शोचति न कांक्षति ॥
शुभाशुभफलत्यागी भक्तिमान् यः स मे प्रियः ॥ १७ ॥
समः शत्रौ च मित्रे च तथा मानापमानयोः ॥
शीतोष्णसुखदुःखेषु समः संगविवर्जितः ॥ १८ ॥
तुल्यनिन्दास्तुतिर्मौनी संतुष्टो येन केनचित् ॥
अनिकेतः स्थिरमतिर्भक्तिमान मे प्रियो नरः ॥ १९ ॥
ये तु धर्मामृतमिदं यथोक्तं पर्युपासते ॥
श्रद्धधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः ॥ २० ॥

इति श्रीभगवद्गीताया श्रीकृष्णार्जुनसवादे
योगविसमविवरणपूर्वकं कर्मफलत्यागरूपधर्मामृतोपदेशो
नाम द्वादशोऽध्याय ॥ १२ ॥

——:(०):——

## द्वादशाध्यायस्य प्रचलित
### श्री भगवद्गीतानुसारं पाठभेदाः

| | | | श्लोकांकाः |
|---|---|---|---|
| .... | .... | .... पर्युपासते | ॥ ३ |
| क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसां | | .... | ॥ ५ |
| .... | .... | .... अतऊर्ध्वं न संशय | ॥ ८ ॥ |
| अथ चित्तं समाधातुं | | .... | ॥ ९ |
| .... | .... | .... मद्योगमाश्रितः | ॥ ११ |
| .... | .... | .... त्यागाच्छांतिरनंतरं | ॥ १२ |
| हर्षामर्षभयोद्वेगै | .... | .... | ॥ १५ ॥ |
| सर्वारंभपरित्यागी | .... | .... | ॥ १६ ॥ |
| शुभाशुभपरित्यागी | .... | .... | |

# ॥ श्री भगवद् गीता ॥

॥ प्राचीनहस्तलिखितपुस्तकाधारेण संशोधिता प्रचलितपाठांतरसहिता ।

## ॥ त्रयोदशोऽध्यायः १३ ॥

अर्जुन उवाच

प्रकृतिं पुरुषं चैव क्षेत्रं क्षेत्रज्ञमेव च ॥
एतद्वेदितुमिच्छामि ज्ञानं ज्ञेयं च केशव ॥ १ ॥

श्री भगवानुवाच

प्रकृतिं पुरुषं चैव क्षेत्रं क्षेत्रज्ञमेव च ॥
एतत्ते कथयिष्यामि ज्ञानं ज्ञेयं च भारत ॥ २ ॥
इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते ॥
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञमिति तद्विदः ॥ ३ ॥
क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ॥
क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम ॥ ४ ॥
तत्क्षेत्रं यच्च यादृक् च यद्विकारि यतश्च यत् ॥
स च यो यत्प्रभावश्च तत्समासेन मे शृणु ॥ ५ ॥
ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक् ॥
ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितम् ॥ ६ ॥
महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च ॥
इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः ॥ ७ ॥
इच्छा द्वेषः सुखं दुःखं सङ्घातश्चेतना धृतिः ।
एतत् क्षेत्रं समासेन सविकारमुदाहृतम् ॥ ८ ॥
अमानित्वमदंभित्वमहिंसा क्षान्तिरार्जवम् ॥
आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ॥ ९ ॥
इन्द्रियार्थेषु वैराग्यमनहङ्कार एव च ॥
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥ १० ॥
असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु ॥
नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥ ११ ॥

मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ॥
विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥ १२ ॥
अध्यात्मज्ञाननित्यत्वं तत्वज्ञानार्थदर्शनम् ॥
एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ॥ १३ ॥
ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते ॥
अनादिमत् परं ब्रह्म न सत्तन्नासदुच्यते ॥ १४ ॥
सर्वतः पाणिपादं तं सर्वतोऽक्षिशिरोमुखम् ॥
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ ॥ १५ ॥
सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ॥
असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥ १६ ॥
बहिरन्तश्च भूतानामचरं चरमेव च ॥
सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत् ॥ १७ ॥
अविभक्तं च भूतेषु विभक्तमिव च स्थितम् ॥
भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥ १८ ॥
ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते ॥
ज्ञानं ज्ञेयं ज्ञानगम्यं सर्वस्य हृदि वेष्ठितम् ॥ ॥ १९ ॥
इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः ॥
मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते ॥ २० ॥
प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ॥
विकारांश्च गुणांश्चैव विद्धि प्रकृतिसंभवान् ॥ २१ ॥
कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते ॥
पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥ २२ ॥
पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान् गुणान् ॥
कारणं गुणसंगोऽस्य सदसद्योनिजन्मसु ॥ २३ ॥
उपद्रष्टाऽनुमन्ता च भर्ता भोक्ता महेश्वरः ॥
परमात्मेति चाप्युक्तो देहेऽस्मिन् पुरुषः परः ॥ २४ ॥
य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह ॥
सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते ॥ २५ ॥

ध्यानेनात्मनि पश्यंति केचिदात्मानमात्मना ॥
अन्ये सांख्येन योगेन कर्मयोगेन चापरे ॥ २६ ॥
अन्ये त्वेवमजानन्तः श्रुत्वाऽन्येभ्य उपासते ॥
तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः ॥ २७ ॥
यावत्संजायते किंचित्सत्त्वं स्थावरजंगमम् ॥
क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि भरतर्षभ ॥ २८ ॥
समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ॥
विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ॥ २९ ॥
समं पश्यन् हि सर्वत्र समवस्थितमीश्वरम् ॥
न हिनस्त्यात्मनाऽऽत्मानं ततो याति परां गतिम् ॥ ३० ॥
प्रकृत्यैव हि कर्माणि क्रियमाणानि सर्वशः ॥
यः पश्यति तथाऽऽत्मानमकर्तारं स पश्यति ॥ ३१ ॥
यदा भूतपृथग्भावमेकस्थमनुपश्यति ॥
तत एव च विस्तारं ब्रह्म संपद्यते तदा ॥ ३२ ॥
अनादित्वान्निर्गुणत्वात्परमात्माऽयमव्ययः ॥
शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते ॥ ३३ ॥
यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते ॥
सर्वत्रावस्थितो देहे तथाऽऽत्मा नोपलिप्यते ॥ ३४ ॥
यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ॥
क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥ ३५ ॥
क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा ॥
भूतप्रकृतिमोक्षं च ये विदुर्यान्ति ते परम् ॥ ३६ ॥

इति श्रीभगवद्गीतायां श्रीकृष्णार्जुनसंवादे
प्रकृतिपुरुषक्षेत्रक्षेत्रज्ञादिवर्णनं नाम त्रयोदशोऽध्यायः ॥ १३ ॥

——:(०):——

# त्रयोदशाऽध्यायस्य प्रचलित
## श्री भगवद्गीतानुसारं पाठभेदाः

| | | | | श्लोकांकाः |
|---|---|---|---|---|
| अर्जुन उवाचानंतरं | .... | .... | | |
| प्रकृतिं पुरुषं.... - ....अयं प्रथमः श्लोकोऽधिकः प्राचीने ॥ | | | | |
| .... | .... | .... | .... क्षेत्रज्ञ इति तद्विदु | ॥ ३ ॥ |
| .... | .... | .... | .... हेतुमद्भिर्विनिश्चितैः | ॥ ६ ॥ |
| अध्यात्मज्ञाननित्यत्वं | | .... | .... | ॥ १३ |
| सर्वतः पाणिपादं तत् | | | .... | ॥ १५ |
| .... | .... | .... | .... सर्वस्य हृदि धिष्ठितं | ॥ १९ ॥ |
| उपद्रष्टाऽनुमंता च भर्ता भोक्ता महेश्वरः | | | .... | ॥ २४ |
| अनादित्वान्निर्गुणत्वात् | | | .... | ॥ ३३ |

——:(०):——

# ॥ श्री भगवद् गीता ॥

॥ प्राचीनहस्तलिखितपुस्तकाधारेण संशोधिता प्रचलितपाठांतरसहिता ॥

## ॥ चतुर्दशोऽध्यायः १४ ॥

श्री भगवानुवाच

परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् ॥
यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः ॥ १ ॥
इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ॥
सर्गेऽपि नोपजायन्ते प्रलये न व्यथंति च ॥ २ ॥
मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् ॥
संभवः सर्वभूतानां ततो भवति भारत ॥ ३ ॥
सर्वयोनिषु कौन्तेय मूर्तयः संभवन्ति याः ॥
तासां ब्रह्ममहद्योनिरहं बीजप्रदः पिता ॥ ४ ॥
सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवाः ॥
निबध्नन्ति महाबाहो देहे देहिनमव्ययम्॥ ५ ॥
तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम् ॥
सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ ॥ ६ ॥
रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम्॥
तन्निबध्नाति कौन्तेय कर्मसङ्गेन देहिनम् ॥ ७ ॥
तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम् ॥
प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ॥ ८ ॥
सत्त्वं सुखे संजयति रजः कर्मणि भारत ॥
ज्ञानमावृत्य तु तमः प्रमादे संजयत्युत ॥ ९ ॥
रजस्तमश्चाभिभूय सत्त्वं भारत वर्धते ॥
रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा ॥ १० ॥
सर्वद्वारेषु देहेऽस्मिन् प्रकाश उपजायते ॥
ज्ञानं यदा तदा विद्याद्विवृद्धं सत्त्वमित्युत ॥ ११ ॥

लोभः प्रवृत्तिरारम्भः कर्मणामशमः स्पृहा ॥
रजस्येतानि जायन्ते विवृद्धे कुरुनन्दन ॥ १२ ॥

अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च ॥
तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ॥ ॥ १३ ॥

यदा सत्त्वे प्रवृद्धे तु प्रलयं याति देहभृत् ॥
तदोत्तमविदां लोकानमलान् प्रतिपद्यते ॥ १४ ॥

रजसि प्रलयं गत्वा कर्मसंगिषु जायते ॥
तथा तमसि लीनास्तु मूढयोनिषु जायते ॥ १५ ॥

कर्मणः सुकृतस्याहुः सात्त्विकं निर्मलं फलम् ॥
रजसस्तु फलं दुःखमज्ञानं तमसः फलम् ॥ १६ ॥

सत्त्वात् संजायते ज्ञानं रजसो लोभ एव च ॥
प्रमादमोहौ जायेते तमसोऽज्ञानमेव च ॥ १७ ॥

ऊर्ध्वं गच्छंति सत्त्वेन मध्ये तिष्ठन्ति राजसाः ॥
जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः ॥ १८ ॥

नान्यं गुणेभ्यः कर्तारं यदा द्रष्टाऽनुपश्यति ॥
गुणेभ्यश्च परं वेत्ति मद्भाव सोऽधिगच्छति ॥ १९ ॥

गुणानेतानतीत्य त्रीन् देही देहसमुद्भवान ॥
जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते ॥ २० ॥

अर्जुन उवाच

कैर्लिङ्गैस्त्रीन् गुणानेतानतीतो भवति प्रभो ॥
किमाचारः कथं चैतांस्त्रीन् गुणानतिवर्तते ॥ २१ ॥

श्री भगवानुवाच

प्रकाशं च प्रवृत्तिं च मोहमेव च पाण्डव ॥
न द्वेष्टि संप्रवृत्तानि न निवृत्तानि काङ्क्षति ॥ २२ ॥

उदासीनवदासीनो गुणैर्यो न विचाल्यते ॥
गुणा वर्तन्त इत्येव योऽवतिष्ठति नेङ्गते ॥ २३ ॥

समदुःखसुखःस्वस्थः समलोष्टाश्मकाञ्चनः ॥
तुल्यप्रियाप्रियो धीरस्तुल्यनिन्दात्मसंस्तुतिः ॥ २४ ॥

मानावमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः ॥
सर्वारंभफलत्यागी गुणातीतः स उच्यते ॥ २५ ॥
मां च योऽव्यभिचारेण भक्तियोगेन सेवते ॥
स गुणान्समतीत्यैतान् ब्रह्मभूयाय कल्पते ॥ २६ ॥
ब्रह्मणो हि प्रतिष्ठाऽहममृतस्याव्ययस्य च ॥
शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च ॥ २७ ॥

इति श्रीभगवद्गीतायां श्रीकृष्णार्जुनसंवादे

सत्वरजस्तमोगुणमयजगद्वर्णनपूर्वकं गुणातीतस्थितिप्राप्तिसाधनज्ञाननिदर्शनं

नाम चतुर्दशोऽध्याय. ॥ १४ ॥

——:(०):——

## चतुर्दशाऽध्यायस्य प्रचलित

### श्रीभगवद्गीतानुसारं पाठभेदाः

| पाठभेदावतरणं | | | श्लोकांकाः |
|---|---|---|---|
| .... | .... | .... सत्त्वं भवति भारत | ॥ १० |
| तथा प्रलीनास्तमसि | .... | .... | ॥ १५ ॥ |
| प्रमादमोहौ तमसो भवतोऽज्ञानमेव च | | .... | ॥ १७ ॥ |
| गुणा वर्तंत इत्येव योवतिष्ठति नेंगते | | ... | ॥ २३ ॥ |
| समदुःखसुख स्वस्थ | | .... | ॥ २४ |
| मानापमानयो | | ... | ॥ २५ |
| सर्वारंभपरित्यागी | | ... | ॥ २५ ॥ |

# ॥ श्री भगवद् गीता ॥

॥ प्राचीनहस्तलिखितपुस्तकाधारेण संशोधिता प्रचलितपाठांतरसहिता ॥

## ॥ पंचदशोऽध्यायः १५ ॥

श्री भगवानुवाच

ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् ॥
छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥ १ ॥

अधश्चोर्ध्वं प्रसृता यस्य शाखा गुणप्रवृद्धा विषयप्रवालाः ॥
अधश्च मूलान्यनुसन्ततानि कर्मानुबन्धीनि मनुष्यलोके ॥ २ ॥

न रूपमस्येह तथोपलभ्यते नान्तो न चादिर्न च संप्रतिष्ठा ॥
अश्वत्थमेनं सुविरूढमूलमसंगशस्त्रेण शितेन छित्त्वा ॥ ३ ॥

ततः परं तत्पदं मार्गितव्यं यस्मिन् गते न निवर्तेत भूयः ॥
तमेव चाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी ॥ ४ ॥

निर्मानमोहा जितसङ्गदोषा अध्यात्मनिष्ठा विनिवृत्तकामाः ॥
द्वन्द्वैर्विमुक्ताः सुखदुःखसंज्ञैर्गच्छन्त्यमूढाः पदमव्ययं तत् ॥ ५ ॥

न तद्भासयते सूर्यो न शशाङ्को न पावकः ॥
यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ॥ ६ ॥

ममैवांशो जीवलोके जीवभूतः सनातनः ॥
मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ॥ ७ ॥

शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ॥
गृहीत्वा तानि संयाति वायुर्गन्धानिवाशयात् ॥ ८ ॥

श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च ॥
अधिष्ठाय मनश्चायं विषयानुपसेवते ॥ ९ ॥

उत्क्रामन्तं स्थितं वाऽपि भुञ्जानं वा गुणान्वितम् ॥
विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः ॥ १० ॥

यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितम् ॥
यतन्तोऽप्यकृतात्मानो नैनं पश्यन्त्यचेतसः ॥ ११ ॥

यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ॥
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥ १२ ॥
गामाविश्य च भूतानि धारयाम्यहमोजसा ॥
पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः ॥ १३ ॥
अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ॥
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥ १४ ॥
सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च ॥
वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम् ॥ १५ ॥
द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ॥
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ १६ ॥
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ॥
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥ १७ ॥
यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ॥
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥ १८ ॥
यो मामेवमसंमूढो जानाति पुरुषोत्तमम् ॥
स सर्वविद्भजति मां सर्वभावेन भारत ॥ १९ ॥
इति गुह्यतमं शास्त्रं मया प्रोक्तं तवाऽनघ ॥
एतद् बुद्ध्वा बुद्धिमान् स्यात्कृतकृत्यश्च भारत ॥ २० ॥

इति श्री भगवद्गीताया श्रीकृष्णार्जुनसंवादे गुह्यशास्त्रविवर्णनपूर्वक पुरुषोत्तमयोगात्मको नाम पञ्चदशाध्याय ॥ १५ ॥

## पंचद्शाध्यायस्य प्रचलित
## श्री भगवद्गीतानुसारं पाठभेदाः

| पाठभेदावतरणं | | श्लोकांकाः |
|---|---|---|
| छंदांसि तस्य पर्णानि .... | ... | ॥ १ ॥ |
| असंगशस्त्रेण दृढेन छित्वा | . | ॥ ३ |
| ततः पदं तत्परिमार्गितव्यं | ... | |
| यस्मिन्गता न निवर्तन्ति भूयः | .... | ॥ ४ |
| अध्यात्मनित्या .... | .... | ॥ ५ |
| गृहीत्वैतानि संयाति .... | . | ॥ ८ ॥ |
| .... .... | ... प्राणिनां देहमाश्रितः | ॥ १४ |
| वेदांतकृद् वेदविदेव चाहं | ... | ॥ १५ |
| इति गुह्यतमं शास्त्रमिदमुक्तं मयानघ | .... | ॥ २० |

# ॥ श्री भगवद् गीता ॥

॥ प्राचीनहस्तलिखितपुस्तकाधारेण संशोधिता प्रचलितपाठान्तरसहिता ॥

## ॥ षोडशोऽध्यायः १६ ॥

श्री भगवानुवाच

अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ॥
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥ १ ॥
अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम् ॥
दया भूतेष्वलौल्यं च मार्दवं ह्रीरचापलम् ॥ २ ॥
तेजः क्षमा धृतिस्तुष्टिरद्रोहो नाभिमानिता ॥
भवन्ति सम्पदं दैवीमभिजातस्य भारत ॥ ३ ॥
दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च ॥
अज्ञानं चाभिजातस्य पार्थ संपदमासुरीम् ॥ ४ ॥
दैवी संपद्विमोक्षाय निबन्धायासुरी मता ॥
मा शुचः संपदं दैवीमभिजातोऽसि पाण्डव ॥ ५ ॥
द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च ॥
दैवो विस्तरशः प्रोक्त आसुरं पार्थ मे शृणु ॥ ६ ॥
प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः ॥
न शौचं नापि चाचारो न सत्यं तेषु विद्यते ॥ ७ ॥
असत्यमप्रतिष्ठं च जगदाहुरनीश्वरम् ॥
अपरस्परसंभूतमकिंचित्कमहेतुकम ॥ ८ ॥
एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ॥
प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ॥ ९ ॥
काममाश्रित्य दुष्पूरं दम्भमानमदान्विताः ॥
असद्ग्रहाश्रिताः क्रूराः प्रचरन्त्यशुचिव्रताः ॥ १० ॥
चिन्तामपरिमेयां च प्रलयान्तामुपाश्रिताः ॥
कामोपभोगपरमा एतावदिति निश्चिताः ॥ ११ ॥
आशापाशशतैर्बद्धाः कामक्रोधपरायणाः ॥
ईहन्ते कामभोगार्थमन्यायेनार्थसञ्चयान् ॥ १२ ॥

इदमद्य मया लब्धमिमं प्राप्स्ये मनोरथम् ॥
इदमस्तीदमपि मे भविष्यति पुनर्धनम् ॥ १३ ॥
असौ मया हतः शत्रुर्हनिष्ये चापरानपि ॥
ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी ॥ १४ ॥
आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया ॥
यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः ॥ १५ ॥
अनेकचित्तविभ्रान्ता मोहजालसमावृताः ॥
प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ ॥ १६ ॥
आत्मसंभाविताः स्तब्धा धनमानमदान्विताः ॥
यजन्ते नामयज्ञैस्ते दम्भेनाऽविधिपूर्वकम् ॥ १७ ॥
अहङ्कारं बलं दर्पं कामं क्रोधं च संश्रिताः ॥
मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥ १८ ॥
तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ॥
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥ १९ ॥
आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ॥
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥ २० ॥
त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ॥
कामः क्रोधस्तथा लोभस्तस्मादेतत् त्रयं त्यजेत् ॥ २१ ॥
एतैर्विमुक्तः कौन्तेय तमोद्वारैस्त्रिभिर्नरः ॥
आचरत्यात्मनः श्रेयस्ततो याति परां गतिम् ॥ २२ ॥
यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ॥
न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥ २३ ॥
तस्माच्छास्त्रं प्रमाणं ते कार्याऽकार्यव्यवस्थितौ ॥
ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥ २४ ॥

इति श्रीमगवद्गीतायां श्रीकृष्णार्जुनसंवादे
दैवासुरसंपद्देवासुरभूतसर्गवर्णनपूर्वकमासुरभावापन्नजन्तूनां
दशानिरूपणं नाम षोडशोऽध्यायः ॥ १६ ॥

—(०)—

## षोडशाऽध्यायस्य प्रचलित

### श्री भगवद्गीतानुसार पाठभेदाः

| पाठभेदावतरणं | | | श्लोकांकाः |
|---|---|---|---|
| दया भूतेष्वलोलुप्त्वं | | .. | ॥ २ ॥ |
| तेज क्षमा धृति शौचमद्रोहो नातिमानिता | | .... | ॥ ३ |
| असत्यमप्रतिष्ठं ते | | .... | ॥ |
| अपरस्परसंभूतं किमन्यत्कामहैतुकं | | .... | ॥ ८ ॥ |
| मोहाद्गृहीत्वाऽसद्ग्राहान्प्र वर्ततेऽशुचिव्रता. | | .... | ॥ १० ॥ |
| ईहते कामभोगार्थं | .... | .... | ॥ १२ ॥ |
| ईश्वरोहमहं भोगी | .... | .... | ॥ १४ ॥ |
| ... | .... | .. मोहजालसमावृता | ॥ १४ |
| क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु | | . | |

— — ०— —

# ॥ श्री भगवद् गीता ॥

॥ प्राचीनहस्तलिखितपुस्तकाधारेण संशोधिता प्रचलितपाठान्तरसहिता ॥

## ॥ सप्तदशोऽध्यायः १७ ॥

अर्जुन उवाच

ये शास्त्रविधिमुत्सृज्य वर्तन्ते श्रद्धयाऽन्विताः ॥
तेषां निष्ठा तु का कृष्ण सत्त्वमाहो रजस्तमः ॥ १ ॥

श्री भगवानुवाच

त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा ॥
सात्त्विकी राजसी चैव तामसी चेति ताः शृणु ॥ २ ॥
सत्त्वानुरूपा सर्वस्य श्रद्धा भवति भारत ॥
श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः ॥ ३ ॥
यजन्ते सात्त्विका देवान् यक्षरक्षांसि राजसाः ॥
भूत–प्रेत–पिशाचांश्च यजन्ते तामसा जनाः ॥ ४ ॥
अशास्त्रविहितं घोरं तप्यन्ते ये तपो जनाः ॥
दम्भाहङ्कारसंयुक्ताः कामरागबलान्विताः ॥ ५ ॥
कर्षयन्तः शरीरस्थं भूतग्राममचेतनम् ॥
मां चैवान्तःशरीरस्थं तान्विद्ध्यासुरनिश्चयान् ॥ ६ ॥
आहारस्त्वपि सर्वस्य त्रिविधो भवति प्रियः ॥
यज्ञस्तपस्तथा दानं तेषां भेदमिमं शृणु ॥ ७ ॥
आयुः सत्त्वबलारोग्यसुखप्रीतिविवर्धनाः ॥
रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः ॥ ८ ॥
कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः ॥
आहारा राजसस्येष्टा दुःखशोकाऽऽमयप्रदाः ॥ ९ ॥
यातयामं गतरसं पूति पर्युषितं च यत् ॥
उच्छिष्टमपि चाऽमेध्यं भोजनं तामसप्रियम् ॥ १० ॥
अफलाकांक्षिभिर्यज्ञो विधिदृष्टो य इज्यते ॥
यष्टव्यमेवेति मनः समाधाय स सात्त्विकः ॥ ११ ॥

अभिसंधाय तु फलं दम्भार्थमपि चैव यत् ॥
इज्यते विद्धि तं यज्ञं राजसं चलमध्रुवम् ॥ १२ ॥
विधिहीनमसृष्टान्नं मंत्रहीनमदक्षिणम् ॥
श्रद्धाविरहितं यज्ञं तामस परिचक्षते ॥ १३ ॥
देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ॥
ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥ १४ ॥
अनुद्वेगकरं वाक्य सत्य प्रियहितं च यत् ॥
स्वाध्यायाभ्यसन चैव वाङ्मयं तप उच्यते ॥ १५ ॥
मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः ॥
भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥ १६ ॥
श्रद्धया परया तप्तं तपस्तत् त्रिविधं नरैः ॥
अफलाकाङ्क्षिभिर्युक्तैः सात्त्विकं परिचक्षते ॥ १७ ॥
सत्कारमानपूजार्थं तपो दम्भेन चैव यत् ॥
क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् ॥ १८ ॥
मूढग्राहेणात्मनो यत्पीडया क्रियते तपः ॥
परस्योत्सादनार्थं वा तत्तामसमुदाहृतम् ॥ १९ ॥
दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ॥
देशे काले च पात्रे च तद्दान सात्त्विकं स्मृतम् ॥ २० ॥
यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ॥
दीयते च परिक्लिष्टं तद् राजसमिति स्मृतम् ॥ २१ ॥
अदेशकाले यद्दानमपात्रेभ्यश्च दीयते ॥
असत्कृतमवज्ञातं तत्तामसमुदाहृतम् ॥ २२ ॥
ओंतत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ॥
ब्राह्मणा तेन वेदाश्च यज्ञाश्च विहिता पुरा ॥ २३ ॥
तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः ॥
प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् ॥ २४ ॥
तदित्यनभिसंधाय फलं यज्ञतपःक्रियाः ॥
दानक्रियाश्च विविधाः क्रियन्ते मोक्षकाङ्क्षिभिः ॥ २५ ॥

सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते ॥
प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ गीयते ॥ २६ ॥
यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते ॥
कर्म चैव तदर्थीयं सदित्येवाभिधीयते ॥ २७ ॥
अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ॥
असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह ॥ २८ ॥

इति श्रीभगवद्गीतायां श्रीकृष्णार्जुनसंवादे

श्रद्धामयपुरुषवर्णनपूर्वकं त्रिगुणरूपतपआहारयज्ञत्रिविध

तपो–दान–ब्रह्मनिर्देशोंतःसदसत्प्रयोगवर्णनं नाम सप्तदशोऽध्याय ॥ १७ ॥

——:(०):——

## सप्तदशाऽध्यायस्य प्रचलित

### श्रीभगवद्गीतानुसारं पाठभेदाः

| पाठभेदावतरण | | | श्लोकांकाः |
|---|---|---|---|
| ....' । | .... | ... यजते श्रद्धयान्विता | ॥ १ |
| प्रेतान्भूतगणांश्चान्ये | | .... | ॥ ४ ॥ |
| .... । | .... | .... भूतग्राममचेतसः | ॥ ६ ॥ |
| इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम् | | .... | ॥ १२ ॥ |
| विधिहीनमसृष्टान्नं | .... | .... | ॥ १३ ॥ |
| ब्राह्मणास्तेन वेदाश्च | .... | ... | ॥ २३ ॥ |

——(०)——

# ॥ श्री भगवद् गीता ॥

॥ प्राचीनहस्तलिखितपुस्तकाधारेण संशोधिता प्रचलितपाठांतरसहिता ॥

## ॥ अष्टदशोऽध्यायः १८ ॥

अर्जुन उवाच

संन्यासस्य महाबाहो तत्त्वमिच्छामि वेदितुम् ॥
त्यागस्य च हृषीकेश पृथक्केशिनिषूदन ॥ १ ॥

श्री भगवानुवाच

काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः ॥
सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥ २ ॥
त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः ॥
यज्ञदानतपःकर्म न त्याज्यमिति चापरे ॥ ३ ॥
निश्चयं शृणु मे तत्र त्यागे भरतसत्तम ॥
त्यागो हि पुरुषव्याघ्र त्रिविधः संप्रकीर्तितः ॥ ४ ॥
यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत् ॥
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥ ५ ॥
एतान्यपि च कर्माणि सङ्गं त्यक्त्वा फलानि च ॥
कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥ ६ ॥
नियतस्य च संन्यासः कर्मणो नोपपद्यते ॥
मोहात्तस्य परित्यागस्तामसः परिकीर्तितः ॥ ७ ॥
दुःखमित्येव यः कर्म कायक्लेशभयात् त्यजेत् ॥
स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ॥ ८ ॥
कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन ॥
सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः ॥ ९ ॥
न द्वेष्ट्यकुशलं कर्म कुशले नानुषज्जते ॥
त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयः ॥ १० ॥
न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः ॥
यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते ॥ ११ ॥

अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् ॥
भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचित् ॥ १२ ॥
पञ्चैमानि महाबाहो कारणानि निबोध मे ॥
साङ्ख्ये कृतान्ते प्रोक्तानि सिद्धये सर्वकर्मणाम् ॥ १३ ॥
अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् ॥
विविधाश्च पृथक्चेष्टा दैवं चैवात्र पंचमम् ॥ १४ ॥
शरीरवाङ्मनोभिर्हि यत्कर्मारभतेऽर्जुन ॥
न्याय्यं वा विपरीतं वा पञ्च ते तस्य हेतवः ॥ १५ ॥
तत्रैवं सति कर्तारमात्मानं केवलं तु यः ॥
पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः ॥ १६ ॥
यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ॥
हत्वाऽपि स इमांल्लोकान्न हन्ति न निबध्यते ॥ १७ ॥
ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्मचोदना ॥
करणं कर्म कर्तेति त्रिविधः कर्मसङ्ग्रहः ॥ १८ ॥
ज्ञानं कर्म च कर्ता च त्रिधैव गुणभेदतः ॥
प्रोच्यते गुणसंख्याने यथावच्छृणु तान्यपि ॥ १९ ॥
सर्वभूतेषु येनैकं भावमव्ययमीक्षते ॥
अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम् ॥ २० ॥
पृथक्त्वेन तु यज्ज्ञानं नानाभावान् पृथग्विधान् ॥
वेत्ति सर्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम् ॥ २१ ॥
यत्तु कृत्स्नवदेकस्मिन् कार्ये सक्तमहैतुकम् ॥
अतत्त्वार्थवदल्पं च तत्तामसमुदाहृतम् ॥ २२ ॥
नियतं सङ्गरहितमरागद्वेषतः कृतम् ॥
अफलप्रेप्सुना कर्म यत्तत्सात्त्विकमुच्यते ॥ २३ ॥
यत्तु कामेप्सुना कर्म साहङ्कारेण वा पुनः ॥
क्रियते बहुलायासं तद्राजसमुदाहृतम् ॥ २४ ॥
अनुबन्धं क्षयं हिंसामनवेक्ष्य च पौरुषम् ॥
मोहादारभ्यते कर्म यत्तत्तामसमुच्यते ॥ २५ ॥

मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः ॥
सिद्ध्यसिद्ध्योर्निर्विकारः कर्ता सात्त्विक उच्यते ॥ २६ ॥
रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः ॥
हर्षशोकान्वितः कर्ता राजसः परिकीर्तितः ॥ २७ ॥
अयुक्तः प्राकृतः स्तब्धः शठो नैष्कृतिकोऽलसः ॥
विषादी दीर्घसूत्रश्च कर्ता तामस उच्यते ॥ २८ ॥
बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणु ॥
प्रोच्यमानमशेषेण पृथक्त्वेन धनञ्जय ॥ २९ ॥
प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये ॥
बन्धं मोक्षं च या वेत्ति बुद्धिः सा पार्थ सात्त्विकी ॥ ३० ॥
यया धर्ममधर्मं च कार्यं चाकार्यमेव च ॥
अयथावत्प्रजानाति बुद्धिः सा पार्थ राजसी ॥ ३१ ॥
अधर्मं धर्ममिति या मन्यते तमसाऽऽवृता ॥
सर्वार्थान् विपरीतांश्च बुद्धिः सा तामसी मता ॥ ३२ ॥
धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः ॥
योगेनाऽव्यभिचारिण्या धृतिः सा पार्थ सात्त्विकी ॥ ३३ ॥
यया तु धर्मकामार्थान् धृत्या धारयतेऽर्जुन ॥
प्रसङ्गेन फलाकांक्षी धृतिः सा पार्थ राजसी ॥ ३४ ॥
यया स्वप्नं भयं शोकं विषादं मदमेव च ॥
न विमुञ्चति दुर्मेधा धृतिः सा तामसी मता ॥ ३५ ॥
सुखं त्विदानीं त्रिविधं शृणु मे भरतर्षभ ॥
अभ्यासाद्रमते यत्र दुःखान्तं च निगच्छति ॥ ३६ ॥
यत्तदग्रे विषमिव परिणामेऽमृतोपमम् ॥
तत्सुखं सात्त्विकं प्रोक्तमात्मबुद्धिप्रसादजम् ॥ ३७ ॥
विषयेन्द्रियसंयोगाद्यत्तदग्रेऽमृतोपमम् ॥
परिणामे विषमिव तद् राजसमिति स्मृतम् ॥ ३८ ॥
यदग्रे चानुबन्धे च सुखं मोहनमात्मनः ॥
निद्रालस्यप्रमादोत्थं

न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ॥
सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात् त्रिभिर्गुणैः ॥ ४० ॥
ब्राह्मणक्षत्रियविशां शूद्राणां च परंतप ॥
कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥ ४१ ॥
शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च ॥
ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम् ॥ ४२ ॥
शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ॥
दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ॥ ४३ ॥
कृषिगोरक्ष्यवाणिज्यं वैश्यकर्म स्वभावजम् ॥
पर्युत्थानात्मकं कर्म शूद्रस्यापि स्वभावजम् ॥ ४४ ॥
स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ॥
स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु ॥ ४५ ॥
यतः प्रवृत्तिर्भूतानां येन विश्वमिदं ततम् ॥
स्वकर्मणा तमेवार्च्य सिद्धिं विन्दति मानवः ॥ ४६ ॥
श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात् ॥
स्वधर्मे निधनं श्रेयः परधर्मोदयादपि ॥ ॥ ४७ ॥
स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥ ४८ ॥
सहजं कर्म कौन्तेय सदोषमपि न त्यजेत् ॥
सर्वारंभा हि दोषेण धूमेनाग्निरिवावृताः ॥ ४९ ॥
असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः ॥
नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति ॥ ५० ॥
सिद्धिं प्राप्तो यथा ब्रह्म प्राप्नोति तन् निबोध मे ॥
समासेन तु कौन्तेय निष्ठा ज्ञानस्य या परा ॥ ५१ ॥
बुद्ध्या विशुद्धया युक्तो धृत्याऽऽत्मानं नियम्य च ॥
शब्दादीन्विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च ॥ ५२ ॥
विविक्तसेवी लघ्वाशी यतवाक्कायमानसः ॥
ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ॥ ५३ ॥
अहङ्कारं बलं दर्पं कामं क्रोधं परिग्रहम् ॥

विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते ॥ ५४ ॥
ब्रह्मभूतः प्रसन्नात्मा न शोचति न हृष्यति ॥
समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥ ५५ ॥
भक्त्या मामभिजानाति योऽहं यश्चास्मि तत्त्वतः ॥
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥ ५६ ॥
सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः ॥
मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ॥ ५७ ॥
चेतसा सर्वकर्माणि मयि संन्यस्य मत्परः ॥
बुद्धियोगं समाश्रित्य मच्चित्तः सततं भव ॥ ५८ ॥
मच्चित्तः सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि ॥
अथ चेत्त्वमहङ्कारान्न श्रोष्यसि विनंक्ष्यसि ॥ ५९ ॥
यदहङ्कारमाश्रित्य न योत्स्य इति मन्यसे ॥
मिथ्यैवाध्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति ॥ ६० ॥
स्वभावजेन कौन्तेय निबद्धः स्वेन कर्मणा ॥
कर्तुं नेच्छसि यन्मोहात्करिष्यस्यवशोऽपि तत् ॥ ६१ ॥
ईश्वरः सर्वभूतानां हृद्येष वसतेऽर्जुन ॥
भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ॥ ६२ ॥
तमेव शरण गच्छ सर्वभावेन भारत ॥
तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् ॥ ६३ ॥
इति ते ज्ञानमाख्यातं गुह्याद्गुह्यतरं मया ॥
विमृश्यैतदशेषेण यदिच्छसि तथा कुरु ॥ ६४ ॥
सर्वगुह्यतमं भूयः शृणु मे परमं वचः ॥
इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम् ॥ ६५ ॥
मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ॥
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥ ६६ ॥
सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ॥
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥ ६७ ॥
इदं ते नातपस्काय नाभक्ताय कदाचन ॥

न चाऽशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ॥ ६८
य इदं परमं गुह्यं मद्भक्तेष्वभिधास्यति ॥
भक्तिं मयि परां कृत्वा स मामेवैष्यत्यसंशयम् ॥ ६९
न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः ॥
भविता न च मे तस्मादन्यः प्रियतरो भुवि ॥ ७० ॥
अध्येष्यते च य इमं धर्म्यं संवादमावयोः ॥
ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः ॥ ७१ ॥
श्रद्धावाननसूयश्च शृणुयादपि यो नरः ॥
सोऽपि मुक्तः शुभाँल्लोकान्प्राप्नुयात्पुण्यकर्मणाम् ॥ ७२ ॥
कच्चिदेतच्छ्रुतं पार्थ त्वयैकाग्रेण चेतसा ॥
कच्चिदज्ञानसंमोहः प्रणष्टस्ते धनञ्जय ॥ ७३ ॥

अर्जुन उवाच

नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाऽच्युत ॥
स्थितोऽस्मि गतसंदेहः करिष्ये वचनं तव ॥ ७४ ॥

सञ्जय उवाच

इत्यहं वासुदेवस्य पार्थस्य च महात्मनः ॥
संवादमिममश्रौषमद्भुतं रोमहर्षणम् ॥ ७५ ॥
व्यासप्रसादाच्छ्रुतवानेतद्गुह्यमहं परम् ॥
योगं योगेश्वरात्कृष्णात्साक्षात्कथयतः स्वयम् ॥ ७६ ॥
राजन् संस्मृत्य संस्मृत्य संवादमिममद्भुतम् ॥
केशवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मुहुः ॥ ७७ ॥
तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेः ॥
विस्मयो मे महाराज हृष्यामि च पुनः पुनः ॥ ७८ ॥
यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ॥
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥ ७९ ॥

इति श्री भगवद्गीतायां श्रीकृष्णार्जुनसंवादे सर्वकर्मफलत्यागपूर्वकं काम्यकर्मणां सम्यन्न्यासपूर्वकं सत्वरजस्तमोगुणमयजगद्विवरणपूर्वकं ब्रह्मप्राप्तियोगो नामाष्टादशोऽध्यायः ॥ १८ ॥

# अष्टादशाऽध्यायस्य प्रचलित
## श्री भगवद्गीतानुसारं पाठभेदाः

| | | | श्लोकांकाः |
|---|---|---|---|
| नियतस्य तु | .... | .... | ॥ ७ |
| दुःखमित्येव यत्कर्म | .... | .... | ॥ ८ |
| शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नरः | | .... | ॥ १५ |
| .... | .... | .... भावमव्ययमीक्षते | ॥ २० |
| यत्तु कृत्स्नवदेकस्मिन्कार्ये सक्तमहैतुकं | | .... | ॥ २२ ॥ |
| क्रियते बहुलायासं तद्राजसमुदाहृतं | | .... | ॥ २४ ॥ |
| .... | .... | .... शठो नैष्कृतिकोऽलसः | ॥ २८ ॥ |
| यत्तदग्रे विषमिव | | ... | ॥ ३७ |
| .... | .... | .... यत्तदग्रेऽमृतोपमं | ॥ ३८ |
| परिचर्यात्मकं कर्म | | .... | ॥ ४४ |
| .... | .... | .... येन सर्वमिदं ततं | ॥ ४६ |

॥ ४७ श्लोकानंतरं पद्यमेकमधिकं प्राचीने ॥

| | | | |
|---|---|---|---|
| समासेनैव कौन्तेय | .... | .... | ॥ ५१ ॥ |
| सिद्धिं प्राप्तो यथा ब्रह्म तथाप्नोति निबोध मे | | .... | ॥ ५१ |
| ... | .... | .... न शोचति न कांक्षति | ॥ ५५ |
| भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः | | .... | ॥ ५६ |
| बुद्धियोगमुपाश्रित्य | | .... | ॥ ५८ |
| मिथ्यैव व्यवसायस्ते | .... | .... | ॥ ६० ॥ |
| .... | .... | .... करिष्यस्यवशोऽपि तत् | ॥ ६१ ॥ |
| .... | .... | .... हृद्देशेर्जुन तिष्ठति | ॥ ६२ ॥ |
| .... | .... | .... यथेच्छसि तथा कुरु | ॥ ६४ ॥ |
| .... | .... | .... मामेवैष्यस्यसंशयः | ॥ ६९ ॥ |
| .... | .... | .... एतद्गुह्यमहं परं | ॥ ७६ |
| विस्मयो मे महान् राजन् हृष्यामि च पुनः पुनः.... | | | ॥ ७८ ॥ |
| .... | .... | .... ध्रुवा नीतिर्मतिर्मम | ॥ ७९ ॥ |

# Shri Bhagavad-Gita

Rendering of the Gloss "Siddhidatri"

## CHAPTER I

Stanza 1. The current reading is समवेता युयुत्सवः, which means "assembled together and desirous to do battle." These two adjectives, viz. "assembled together" and "eagerly desirous to do battle" qualify, according to the current reading, both the Kauravas and the Pandavas. This does not yield good sense. If we follow the current reading, the sense of the stanza will be :

'O Sanjaya, what are my sons, the sons of Pandu and other warriors, doing, assembled together and eagerly desirous to do battle, in the holy field of Kurukshetra ? '

But the adjective "desirous to do battle" is inappropriate here. For, among those "assembled together," all were not disposed or eager to engage in that war. There may have been some who desired blood-shed But others had come to fight out of attachment, exertion of personal influence or fear of their sovereign overlord, and for many such reasons. Hence the phrase "desirous to do battle" is not suitable in this stanza; but the compound सर्वक्षत्रसमागमे, "where all the Kshatriyas have gathered together" qualifying the noun "Kurukshetra" is more appropriate here. Hence that reading appears to be the correct one.

Stanza 3. The current reading is पश्यैतां . It means "behold (पश्य) this (एतां) army", while the old reading is पश्य तां which means "behold (पश्य) that (तां) army of the Pandavas" The encampment of the Pandava army extended over a great distance. Hence the use of the pronoun तां (yonder) is quite appropriate. There is no material alteration in the sense. The old reading provides greater ease of pronunciation.

एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु ॥
बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि ॥ ४० ॥

नेहातिक्रमनाशोस्ति प्रत्यवायो न दृश्यते ॥
स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥ ४१ ॥

---

ते तुभ्यं एषा सांख्ये सम्यग्ज्ञाने ब्रह्मज्ञानविषयके शास्त्रे यादृशी निश्चयात्मिका बुद्धिरुचिता साऽभिहिता तज्ज्ञानं कथितं एषैव बुद्धिः ज्ञानं सांप्रतं योगे कर्मयोगे कर्मकौशले व्यवहारे यथा युज्यते तु तथैव शृणु स्वीकुरु जानीहि अनुसर। यया उपयुक्तया बुद्ध्या युक्तस्त्वं हे अर्जुन कर्मबन्धं कृतकर्मफलरूपेण यो बंधस्तं प्रहास्यसि त्यक्ष्यसि। द्वंद्वभावरूपवासनाबद्धमनसैव कर्मसु मनुष्या निबद्धास्तद्वासनाबद्धद्वंद्वभावत्यागे बंधमुक्ता एव ॥ ४० ॥

इह अस्यां बुद्धौ एतादृशे द्वंद्वातीतरूपे तत्त्वज्ञाने अतिक्रमनाशो नास्ति प्रत्यवायोपि न दृश्यते। सांख्यज्ञाननिष्ठेन द्वंद्वातीतमनसा सुखदुःखलाभालाभजयाजयवासनाविरहितेन यानि कार्याणि क्रियंते तत्र कर्मयोगे चित्तवृत्तिनिरोधलक्षणवत् क्वचिदतिक्रमे प्रमादे जाते सत्यपि तस्य द्वंद्वातीतस्य मनुष्यस्य नाशोऽधःपातो न भवति तथा तेन प्रज्ञापराधजन्यातिक्रमेण प्रत्यवायः पापमपि न ब्रह्मज्ञानसिद्धांतेन दृश्यते न कल्प्यते न भवति। कुत इत्याह स तु परार्थबुद्ध्या विहितो धर्म एव तस्य धर्मस्य स्वल्पमपि महतो भयाद्दुःखपरिभवात् त्रायते रक्षति अर्थात् अल्परूपेणाप्याचरितधर्मस्य फलं न नश्यति अधिकधर्माचरणेऽधिकं फलमल्पधर्माचरणेऽल्पं फलं तु भवत्येव ॥ ४१ ॥

40 This instruction set forth to you now is in accordance with the Samkhya Now hear the same teaching as according to the Yoga Possessed of this teaching you will cast off the bondage of action (which is the result of the attitude of duality).

41 In this (knowledge beyond duality, unlike the yoga which consists in the suppression of the functions of the mind) there is no danger resulting from the trangression of the rules. There is also no possibility of sin in it. Even a little (practice) of this Karmayoga saves one from great fear (of unrighteousness).

व्यवसायात्मिका बुद्धिरेकैव कुरुनन्दन ॥
बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ॥ ४२ ॥

द्वितीयाध्यायस्यैकादशश्लोकादारभ्य ३९ श्लोकपर्यंतमर्जुनमोहपरिहाराय द्वंद्वभावजन्यवैकल्यनिवृत्तये युद्धे प्रविवर्तयिषुः श्रीकृष्णः सांख्यज्ञानमुपदिश्य सांख्यसंस्कृता बुद्धिः कीदृशीति प्रतिपाद्य ४० तमश्लोके सांख्यसंस्कृताया बुद्ध्याः फलमवादीत् । पुनश्च ४१ तम श्लोकेन तस्यां बुद्धौ प्रज्ञापराधजन्यदोषशंकां निरस्य पुनरेवोपर्युक्तसांख्यबुद्धिमतां जनानां दशां निर्वर्ण्य तमेवोद्देशं ४२ तमश्लोकेन दृढयन्नाह-

हे अर्जुन, व्यवसायात्मिका—व्यवसायो विविधप्रकारा प्रवृत्तिः संसारव्यवहारविविधोपाधयस्तैरावृता या बुद्धिरेकैव एकप्रकारैकपरिणामा एवेति निश्चितं । अर्थात् सुखप्राप्तिदुःखनिवृत्तिरूपैकप्रकारपरिणामरूपिण्येव व्यवसायात्मिका बुद्धिरस्ति प्रपंचपरिचितविविधप्रवृत्तिवशंगतानां व्यवसायिनां जनानां बुद्धिरेकप्रकारैव । अनया सुखदुःखाकुलया व्यवसायात्मिकया बुद्ध्या नात्मतत्त्वज्ञानमनुभवितुं शक्यते यतस्ते देहात्मैक्यबुद्धयः । विविधसुखप्राप्तिरूपव्यवसायासक्तचित्तास्ते शरीरशरीर्यैक्यबुद्ध्या सुखनाशे शोचन्ति दुःखनाशे हृष्यंति देहनाशे चात्मनाशमिव मन्यमानाः शोकसंकुला भवन्ति यतस्तेषां विविधसुखदुःखप्रदव्यवसायावृता बुद्धिस्तादृशैकप्रकारा एकदेशज्ञानैवैकप्रकारसुखदुःखहर्षशोकलाभालाभादिभावबद्धा एव ।

42 To remove Arjuna's delusion and perturbation due to the dualistic attitude and to urge him to fight, Shri Krishna taught him the Samkhya knowledge from the 11th to 39th stanza of this chapter and explained the nature of the intellect which has cultivated that knowledge. In the 40th stanza he mentioned the result of such a cultured intellect and again in the 41st, removing the suspicion of any untoward outcome by that intellect on account of any ignorant transgression, he envisages the state of the people endowed with such Samkhya intelligênce and corroborates the matter thus in the 42nd:

O Arjuna, it is certain that the intelligence enveloped by the various worldly activities is of one mode, one result, viz. seeking happiness and avoiding pain. Such is the one-pointed intelligence व्यवसायात्मिका बुद्धिः एका

पुनरव्यवसायिनां बुद्धयस्तु तद्विपरीता एव। अव्यवसायविविधसंसारव्यवहारप्रवृत्त्यपरायत्तज्ञानानां सदसद्विवेकबुद्धीनां निष्कामानामधिगतनिर्णीततत्त्वनिश्चयानामनेकशास्त्रज्ञानपूर्णा विविधज्ञाननिभृता बहुशाखा विविधज्ञानशाखाविशालाः सर्वविषयपूर्णज्ञाना अनंतास्तलस्पर्शिज्ञानविज्ञानपूर्णाः सर्वत्राऽकुंठिता इतरेतरतर्क्या बुद्धयः। परमतत्वज्ञानेन देहात्मभिन्नदृशस्ते च शरीरनाशे नात्मानमनुशोचन्ति ॥

त एव देहात्मभिन्नदृशो ज्ञानिनोऽव्यवसायिनो विविधज्ञानविभवेन सर्वशास्त्रीयज्ञानसर्वज्ञत्वेन समाधियोग्या भवन्ति। तेषामव्यवसायिनां विविधशास्त्रज्ञानपूर्णा बहुशाखा अनंता अकुंठिताः सर्वपारगाः समाधियोग्या बुद्धयः स्युः। समाधिसिद्धांस्तांस्तारयन्ति भवार्णवात् परं च व्यवसायात्मिका बुद्धिर्मनुष्यान् संसारे सांसारिकसुखदुःखप्रदव्यवहारेषु बध्नाति ततो व्यवसायात्मिकबुद्धयो जना देहात्मैक्यदृशो मोक्षमार्गसोपानरूपसमाधिभ्रष्टा भवन्ति ॥ ४२ ॥

प्रचलितगीतायां "व्यवसायात्मिका बुद्धिरेकेह" एका इह इति पाठस्तत्र प्राचीनपाठो "व्यवसायात्मिका बुद्धिरेकैव" एका एव इति विद्यते। इहाऽपेक्षया एव पाठो हि वरीयान्। एवशब्देन "व्यवसायात्मिका" विशेषणं प्रकृतप्रसंगसंबद्धं भवति तदनुबंधेन युक्तं च। इह शब्देनाऽस्मिन् जगत्यस्मिन् संसारे, ईश्वराराधनरूपे कर्मयोगे, परमेश्वराराधनरूपे श्रेयोमार्गे, इत्याद्यर्थाः टीकाकारैः प्रतिपादिताश्चासंबद्धाः प्रसंगानर्हा एव। सांख्यज्ञानसंस्कृताया बुद्ध्या

of all known beings engaged in the several activities of the universe. With such an intelligence which is subject to pleasure and pain they cannot experience the true knowledge of Self, for they think that the body is the Self. With minds attracted to the activities designed *for attaining various kinds of happiness, they re*cognise no difference between the body and the Dweller in the body, grieve at the ceasing of pleasure, exult at the disappearance of pain and succumb to sorrow at the fall of the body as if their very self were dead. For their intelligence is enveloped in activities giving different kinds of pleasure and pain, it is confined to this one impulsion and is therefore of limited knowledge, it cannot transcend the singular attitude of subjection to pleasure and pain, joy and grief, gain and loss etc.

एव प्रसंगश्चात्रोपदेशे । नार्जुन ईश्वराराधनपराङ्मुखो नास्तिको वा । न च सर्ववेदशास्त्रप्रवीणेऽर्जुने तत्संभवति न च तत्प्रसंगोऽपि । अत इह शब्देन परमेश्वराराधनाचर्था व्यर्था एव । स्वस्वमतसिद्ध्यर्थमपि एव शब्देऽविद्यमाने सर्वैरेव सोऽध्याहृतः अत एवात्र इह स्थाने एव पाठ एवोचितः ।

श्लोकस्यास्यार्थोऽद्यावधि यथाच प्रचलितः स नोचित इति नः प्रतिपादितं । श्लोकेऽस्मिन्व्यवसायात्मिका बुद्धिश्चाऽव्यवसायिनां बुद्धयश्चेतच्छब्दानां येऽर्थाः प्रतिपादिताः सर्वटीकाकारैर्न तथा श्रीकृष्णवेदव्यासाशयः। तयोराशयो नैकेनापि टीकाकृता प्रकटीकृत इति स्पष्टं ।

द्वितीयाध्यायस्य एतच्छ्लोकविवेचनात् प्राक् श्रीकृष्णश्चात्मतत्त्वं विवृणोति सांख्यशास्त्रांतर्गतं । अत्र च श्रीकृष्णस्यांतर्गतः प्रकटो वाऽऽशयः स एव यच्छरीरं नाशस्वभावमात्मा चाविनाशीति । आत्मनोऽविनाशित्वसिद्धये एवायमुपदेशः देहे नष्टे आत्मा न नश्यतीत्थं प्रतिपाद्य युद्धे प्रवर्तयितुमेव । हेतुरयं स्पष्टः सत्रप्यहेतुकमेव सर्वटीकाकृद्भिर्व्यवसायाऽव्यवसायशब्दचित्रं विचित्रं चित्रितमिति चित्रं । व्यवसायशब्दस्यार्थो ज्ञान्यात्मतत्त्वज्ञः श्रीकृष्णभक्तिपरायणो श्रीरामभक्तः परमेश्वरभक्तः परमेश्वर एकनिष्ठ इत्यादि भावैर्विवेचितः । अव्यवसायिशब्दस्य चार्थः प्रमाणजनितविवेकरहितोऽप्रामाणिकोऽप्रामाणिकबुद्धिरीश्वराराधनबहिर्मुखः कामी अज्ञानी अनिश्चिततत्त्वार्थो विवेकबुद्धिरहितश्चेत्यादिवाक्यैर्निर्णीतष्टीकाकारैः । विपरीतेन तेन शब्दार्थेन समग्रश्लोकार्थवैयर्थ्यमेव जातं ।

But the intellect of those who have no such design is just the opposite. Their knowledge is not subjugated by the multifarious worldly activities, their intelligence discriminates between the real and the unreal, they have no desire, their resolution is born of the realisation of truth. The intellect of such men will be replete with the knowledge of many sciences, complete with varied wisdom, embracing many branches of knowledge, wide, perfectly aware of all subjects, infinite, thorough, wise and full of the supramental knowledge, never incapable in any direction, undivinable to others. Perceiving the body and the soul distinctly by their knowledge of the supreme truth, they do not grieve for the soul at the fall of the body.

And these sages who do not confuse the body with the soul and are free from action, become qualified for

प्रतिटीकाकारोक्तीनां संपूर्णोद्धारेणातिविस्तरो वैफल्यकरो वाचकानामिति समासेनात्र तत्तट्टीकाकारवाक्यान्येवोद्धृतानि ।

श्री शंकराचार्याः—

"व्यवसायात्मिका निश्चयस्वभावा एकैव बुद्धिः अव्यवसायिनां प्रमाणजनितविवेकरहितानां बुद्धयो बहुशाखा बहुभेदाः प्रतिशाखाभेदेन ह्यनन्ताश्च बुद्धयः ।"

श्री आनंदगिरिः—

"व्यवसायात्मिका बुद्धिः सा एव एका प्रमाणभूता बुद्धिः। अव्यवसायिनां अप्रामाणिकानां अप्रामाणिकबुद्धीनां स्वकपोलकल्पिता बुद्धयः बहुशाखा अनंताश्च।"

श्रीधरस्वामी—

"इह ईश्वराराधनलक्षणे कर्मयोगे व्यवसायात्मिका परमेश्वरभक्त्यैव ध्रुवं तरिष्यामीति निश्चयात्मिका एकैव एकनिष्ठैव बुद्धिर्भवति। अव्यवसायिनां ईश्वराराधनबहिर्मुखानां कामिनां अनन्ता बहुशाखाश्च बुद्धयो भवन्ति।"

सांख्यज्ञानोपदेशे क्वात्र परमेश्वरभक्तिप्रवेशः? देहात्मतत्वविनिश्चये ज्ञानेऽत्र कुतः परमेश्वरानयनं?

श्री नीलकंठः—

"व्यवसायस्तत्त्वनिश्चयस्तदात्मिका बुद्धिरंतःकरणप्रवृत्तिः अहं ब्रह्मास्मीति वाक्यजन्या ब्रह्मविद्याभिधाना एका एव। अव्यवसायिनां अज्ञानिनां तु बुद्धयः..."

yogic contemplation by the power of their varied knowledge and their fullness of wisdom. Their intellects, multifarious, infinite and all-accomplishing, are adapted for contemplation and free them from the thraldom of worldly existence after they have attained perfection in the state of contemplation. But the intellect subject to activism binds men to the world, to the activities resulting in worldly pleasure and pain, and such men considering there is no soul but the body are unfit to climb the stairs of contemplation leading to absolution. (42)

While the vulgate reads व्यवसायात्मिका बुद्धिरेकेह, the ancient text runs ॰बुद्धिरेकैव. Nowt he reading एव is better than इह as it relates the attribute व्यवसायात्मिका to the context and is therefore appropriate, while the latter

नीलकंठस्य कीदृशोयं तत्वनिश्चयात्मको व्यवसायः? अहं ब्रह्मास्मीति कीदृशी अंतःकरणप्रवृत्तिः? कीदृशीयं ब्रह्मविद्या व्यवसायशब्दसिद्धा?

तत्त्वप्रकाशिका—

"इह जीवलोके व्यवसायात्मिका बुद्धिरेका भगवत्तोषणात्मकमेव कर्म कर्तव्यं नान्यत्. त्वत्प्रसादेन तरिष्यामो नान्याराधनेनेति निश्चयो व्यवसायस्तदात्मिका बुद्धिः। अव्यवसायिनां अनिश्चिततत्त्वानां बुद्धयः……।"

श्रीकृष्णः कस्य भगवतस्तोषणमुद्दिश्योपदिशति? यद्ययमर्थः सार्थकश्चेत्, श्रीकृष्णः कमप्यन्यं भगवंतमुद्दिश्यैव वदतीति सिद्ध्यते। श्रीकृष्णार्जुनौ नरनारायणरूपिणौ पूर्वजन्मनीह जन्मनि च व्यासश्च शंकरभक्ताः शंकरोपरिकृततपःप्राप्तसिद्धय एव। तर्हि किं भगवच्छंकरतोषणात्मकं कर्म कर्तव्यं नान्यदिति श्रीकृष्णोद्देशं विशदीकरोति व्यासस्तत्त्वप्रकाशिकाच? तथात्वेपि व्यवसायशब्दस्यायमर्थो नोपपद्यते चात्र नैतत्प्रसंगानुरूपो वा।

मधुसूदन-भाष्योत्कर्षदीपिका-परमार्थप्रपाकार-राघवेंद्र-तिलकप्रभृतयः सर्व एव टीकाकाराः उपर्युक्तप्रकारेण प्रतिपादयन्ति "व्यवसायात्मिका बुद्धिरव्यवसायिनां बुद्धयः" एतच्छब्दान्।

शरीरशरीरिधर्मबोधात्मकसांख्यशास्त्रोपदेशप्रवृत्तः श्रीकृष्णः। न च कस्यचिद्भगवतो देवस्य भक्त्युपदेशाय। नात्र तत्प्रसंगोपि। नो चेत् कं भगवन्तं

gives rise to interpretations like "in this world", "in Karmayoga which is a foım of worship", "in the path of salvation through devotion to God", put forward by the commentators but quite unrelated to the context. The discussion at this part of the teaching is about the intellect under the culture of the Samkhya knowledge. Arjuna is not averse to the worship of God, he is no materialist. That is inconceivable in him who was a past master of all scriptures and sciences. Nor does the context demand such a sense Hence it is futile to assign meanings like "in the worship of God" to इह. Indeed in default of एव it has been assumed by all to bring out their own interpretations. Hence it is quite proper to read here एव instead of इह.

We have shown that the currenti nterpretation of the stanza is incorrect. The meanings assigned to व्यव-

परमेश्वरं वोद्दिश्य श्रीकृष्णोऽवादीत्? वस्तुतो "व्यवसायात्मिका बुद्धिः" इत्यार्थो भगवत्तोषणात्मिकेति न भवति संभवति वा।

व्यवसायः

सत्वं द्रव्ये गुणे चित्ते व्यवसायस्वभावयोः—हेमचंद्रः
द्रव्याऽसुव्यवसायेषु। सत्वं-अमरः
षड्गुणो व्यवसायश्च—चाणक्यः
सर्वथा सदृशं सीते मम ह्यस्य कुलस्य च॥
व्यवसायमनुप्राप्ता कान्ते त्वय्यतिशोभनं॥—वाल्मीकिः

अर्थात् व्यवसायो विविधसुखदुःखप्रदा प्रवृत्तिः विविधोपाधिसंकुल-बुद्धेरवस्था।

वेदोपनिषन्मीमांसादर्शननिरुक्तपुराणेतिहासादिषु क्वापि व्यवसाय-शब्द एकाग्रता निश्चयात्मकं तत्वज्ञानं भगवत्तोषणात्मकं कर्मेत्यर्थे न प्रतिपादितः प्रत्युत शरीरमनःप्रवृत्तिर्विविधोपाधिरूपा क्रियैव व्यवसाय इति दृश्यते। अनेन सिद्ध्यति यद् व्यवसायात्मिका बुद्धिः इति विविधप्रकारेणात्मनः शरीरस्य च प्रवृत्तिः सुखदुःखोत्पादिका वृत्तय एव।

व्यवसायवान् व्यवसायी व्यवसायोऽस्यास्तीति व्यवसायविशिष्टे वाणिज्यकारके विविधैहिकप्रवृत्तिपरायणे व्यापारोद्यमासक्तो नैकसुखभोगविलासलिप्सुः। ततोऽ

---

सायात्मिका बुद्धिः and अव्यवसायिनां बुद्धयः by all commentators are not in accordance with Shri Krishna's or Vyasa's idea. It is clear that their intention has not been brought out by any commentator.

Shri Krishna has in this chapter, before the stanza under discussion, expounded the principle of the soul as in the Samkhya system. Here too his purport, implied or explicit, is that it is of the body to decay while the soul is decayless. This teaching is to establish the undecaying character of the soul. The object is to prompt Arjuna to fight by showing that the soul does not die when the body falls. Though this motive is clear, it is indeed surprising that the commentators should have made such a mess of the words व्यवसाय and अव्यवसाय. They have taken a व्यवसायिन् to be a sage, knower of the truth of the soul, exclusively devoted to Shri Krishna

व्यवसायः अव्यवसायी अव्यवसायवान् एतच्छब्दास्तद्विपरीतार्था व्यवसायरहित्यशांतिसमाध्युचितरहःस्थानयतचित्तात्माऽपरिग्रहार्थबोधकास्तदर्थप्रतिपादका इति स्पष्टमेव तद् वस्तु। श्रीकृष्णोऽर्जुनमुपदिशति यत् व्यवसायात्मिका बुद्धिः विविधोपाधिप्रवृत्तिकारिणी बुद्धिरेका एव एकप्रकारैकोद्देशैव। यद्वद्वस्तुसुखापेक्षा तत्र तत्र प्रवृत्तस्वभावा। यथाहि स्त्रीसुखं कामयमाना बुद्धिस्तत्प्राप्तिव्यवसायं प्रवृत्तिं वा भजते। संसारस्य विविधविलासैश्वर्यभोगकामा बुद्धिस्तद्प्राप्तिसाधनव्यवसायं, दारिद्र्यदुःखगदाकुला तन्निवृत्तिरूपं व्यवसायं, स्वर्गकामा वेदादिप्रतिपादितयज्ञादिकर्मरूपं व्यवसायं, मातृदुःखव्याकुला तन्निवारणरूपं व्यवसायं भजते सा व्यवसायात्मिका बुद्धिर्भेदप्रचुराप्युद्देशेनैका एकप्रकारैकविधपरिणामा न तया व्यवसायात्मिकया बुद्ध्याऽऽत्मतत्त्वनिश्चयो देहात्मतत्वज्ञानं वोद्भवति प्रत्युत अव्यवसायिनां परित्यक्तसंसारव्यवहारशरीरमनःप्रवृत्तीनां तत्त्वज्ञानिनामपरिग्रहाणां यतमनस्कानां सर्वोपाधिविरक्तानां रहःस्थितानां स्वपरभावपराणामपरापराविद्याविहारिणां सर्वव्यवसायशून्यानां सर्ववेदशास्त्रज्ञानपारगाणां बुद्धयो बहुशाखाः विविधज्ञानविज्ञानपारंगता अनंता मनसाऽतर्क्या अधिगततत्त्वार्थाः सर्वत्राऽकुंठिता अमुग्धा अस्तब्धाः सन्ति।

अनेन व्यवसायात्मिका बुद्धिः विशिष्टविविधोपाधिप्रवृत्तिसंकुला बुद्धिरित्युक्त्वा तत्रैवाग्रिमे श्लोके श्रीकृष्णो दृढयति, "व्यवसायात्मिका बुद्धिः समाधौ न विधीयते॥" अर्थात् एतादृशी व्यवसायपूर्णा व्यवसायिनां सुखदुःखानुबन्धिनी उपर्युक्ता व्यवसायात्मिका बुद्धिः समाधौ न विधीयते or Shri Rama or the great God Shiva, and an अव्यवसायिन् to be an ignorant man devoid of the knowledge as determined by authoritative canons, averse to the worship of God, a slave to desires, devoid of discrimination and so forth. By assigning such contrary meanings the whole stanza has of course become meaningless.

We do not wish to tire our readers by quoting every commentator *in extenso.* Only the essential words are here extracted:

Shri Shankaracharya—व्यवसायात्मिका निश्चयस्वभावा एकैव बुद्धिः, अव्यवसायिनां प्रमाणजनितविवेकरहितानां बुद्धयो बहुशाखा बहुभेदाः प्रतिशाखाभेदेन ह्यनन्ताश्च बुद्धयः।

Shri Anandagiri—व्यवसायात्मिका बुद्धि सा एव एका प्रमाणभूता बुद्धिः, अव्यवसायिनां अप्रामाणिकानां अप्रामाणिकबुद्धीनां स्वकपोलकल्पिता बुद्धयः बहुशाखा अनन्ताश्च।

समाधौ योगे देहात्मतत्वयिनिश्चयात्मकज्ञानरूपे नोचिता। श्रीकृष्णश्च भगवान् व्यासश्च व्यवसायात्मिका बुद्धिरस्यार्थं टीकाकारमतपोषकं न चक्रतुरिति सिद्धम्।

अनेन च अव्यवसायी शब्दोऽपि स्वतः सिद्ध एव तथाप्युच्यते—

योगी युंजीत सततमात्मानं रहसि स्थितः॥

एकाकी यतचित्तात्मा निराशीरपरिग्रहः॥

समाधियोग्यस्थितिप्राप्तिकरा एवैते गुणा अव्यवसायवत एव पुरुषस्य स्युः।

समाधियोग्याऽव्यवसायिपुरुषस्य बुद्धिर्नैकदेशिका। अव्यवसायिभिः सर्वोपाधिविरक्तैर्योगमार्गप्रवृत्तैः किं किं ज्ञेयमिति प्रसिद्धमुपनिषत्सु चेतरेषु शास्त्रेषु वा।

श्रीगोविन्दभगवत्पादाः—

स्थिरदेहोऽभ्यासवशात्प्राप्य ज्ञानं गुणाष्टकोपेतं॥

प्राप्नोति ब्रह्मपदं न पुनर्भवावासदुःखे च॥

तस्माज्जीवन्मुक्तिं समीहमानेन योगिना प्रथमं॥

दिव्या तनुर्विधेया हरगौरीसृष्टिसंयोगात्॥

यतो वा इमानि भूतानि जायंते ……तद्विजिज्ञासस्व तद्ब्रह्मेति…अन्नं ब्रह्मेति व्यजानात्……तद्विज्ञाय प्राणो ब्रह्मेति व्यजानात्……मनो०……विज्ञानं० ……आनंदो ब्रह्मेति व्यजानात्……सैषा भार्गवी वारुणी विद्या परमे व्योम·

Shridhara Svamin—इह ईश्वराराधनलक्षणे कर्मयोगे व्यवसायात्मिका परमेश्वरभक्त्यैव ध्रुवं तरिष्यामीति निश्चयात्मिका एकैव एकनिष्ठैव बुद्धिर्भवति। अव्यवसायिनां ईश्वराराधन बहिर्मुखानां कामिनां अनन्ता बहुशाखाश्च बुद्धयो भवन्ति।

Why should devotion to God butt in heie when Samkhya *knowledge is being taught?* Why should the supreme God परमेश्वर be brought in when the principles of the body and of the soul are being determined?

Shri *Nilakantha*—व्यवसायस्तत्वनिश्चयस्तदात्मिका बुद्धिरन्तःकरणप्रवृत्तिः अहं ब्रह्मास्मीति वाक्यजन्या ब्रह्मविद्याभिधाना एका एव। अव्यवसायिनां अज्ञानिनां तु बुद्धयः …

Of what kind is this enterprise of *ascertaining* the truth mentioned by Nilakantha? What is the mental activity अंतःकरणप्रवृत्तिः born of the statement "I am Brahman"? What is the nature of this science of Brahman which is intended by the word व्यवसाय?

*Tattva-prakashika*—इह जीवलोके व्यवसायात्मिका बुद्धिरेका भगवत्तोषणात्मकमेव कर्म कर्तव्यं नान्यत्, त्वत्प्रसादेन तरिष्यामो नान्याराधनेनेति निश्चयो व्यवसायस्तदात्मिका बुद्धिः। अव्यवसायिनां अनिश्चिततत्वानां बुद्धयः…

प्रतिष्ठिता । य एवं वेद प्रतितिष्ठति ॥ तैत्तिरीयो०

अयं वाव स योऽयमन्तर्हृदय आकाशस्तदेतत्पूर्णमप्रवर्तिनीं श्रियं लभते य एवं वेद ।

.........महश्चेत्युपासीत चक्षुष्यः श्रुतो भवति य एवं वेद ।.....षोडशं वर्षशतं जीवति य एवं वेद । ......भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ।

| लोकेषु | पंचविधं | सामोपासीत |
|---|---|---|
| वृष्टौ | ,, | ,, |
| सर्वास्वप्सु | ,, | ,, |
| ऋतुषु | ,, | ,, |
| पशुषु | ,, | ,, |
| प्राणेषु | ,, | ,, |

यो वा एतदक्षरं गार्ग्यविदित्वाऽस्मिन् लोके जुहोति यजते तपस्तप्यते अंतवदेवास्य तद् भवति ॥ (छांदोग्यो०)

अन्धन्तमः प्रविशन्ति येऽविद्यायां रताः । ततो भूय इव तेतमो य उ विद्यायां रताः ॥ ईशावास्यो० ॥

शौनको ह वै महाशालोऽङ्गिरसं विधिवदुपसन्नः पप्रच्छ। कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति ॥ ३ ॥

Which God's propitiation भगवत्तोषण is intended by Shri Krishna ? If this interpretation be correct, it follows that he should be speaking of some other God. Shri Krishna and Arjuna are Narayana and Nara; in the former incarnation and the present one they and Vyasa have been devotees of Shiva, they have obtained their powers by penance done in Shiva's name. Does then the *Tatva-prakashika* mean Shri Krishna's intention to have been that no other work should be done but भगवच्छंकरतोषणात्मकं कर्म propitiation of the God Shiva ? Still the word व्यवसाय can have no such meaning, nor does it suit the present context.

Madhusudana, the authors of *Bhashyotkarsha Dipika* and *Paramartha-prapa*, Raghavendra, Tilak and all other commentators explain the phrases व्यवसायात्मिका बुद्धिः and अव्यवसायिनां बुद्धयः in the same strain as above set forth.

तस्मै स होवाच। द्वे विद्ये वेदितव्ये इति ह स्म यद् ब्रह्मविदो वदन्ति परा चैवाऽपरा च ॥४॥

तत्राऽपरा ऋग्वेदो यजुर्वेद: सामवेदोऽथर्ववेद शिक्षा कल्पो व्याकरणं निरुक्तं छंदो ज्योतिषमिति। अथ परा यया तदक्षरमधिगम्यते ।

यस्याग्निहोत्रमदर्शमपौर्णमास्यमचातुर्मास्यमनाग्रयणमतिथिवर्जितं च। अहुतमवैश्वदेवमविधिना हुतमासप्तमांस्तस्य लोकान् हिनस्ति ॥ (मुंडको०)

अनेन निश्चीयते यदव्यसायिनां बुद्धयो बहुशाखाः सर्वशास्त्रांगोपांगज्ञानपूर्णा अनन्ता वा किंप्रकारा वा स्युरिति। व्यवसायात्मिका बुद्धिः सर्वोपाधियुता देहात्मज्ञानशून्या संसारसुखदु:खपर्याकुला च। अव्यवसायात्मिका अव्यवसायिनां बुद्धयस्तु परमतत्वदर्शिन्योऽपरापराविद्यालंकृता देहात्मज्ञानपूर्णा समाधियोग्या ब्रह्मतादात्म्यकारिण्यः सर्वगुणसम्पन्नाश्चेति ॥ ४२ ॥

श्रीकृष्णस्य वेदव्यासस्य च मते व्यवसायात्मिका बुद्धिरेव निश्चितस्वभावा परमेश्वरभक्तिरूपैकनिष्ठा भगवत्तोषिण्यात्मतत्वनिश्चयवोधिकेत्यादिसर्वगुणगणान्विता श्रेष्ठा गरीयसी चेत् तथैवाऽव्यवसायात्मिका बुद्धिश्चाऽधमा तत्वार्थविवेकहीनाऽप्रामाणिकेश्वराराधनवहिर्मुखाऽज्ञानिजनोचिताऽनिश्चिततत्वेत्यादिसर्वदुर्गुणसम्पन्ना चेत् "व्यवसायात्मिका बुद्धिः समाधौ न विधीयते" चेति नव

Shri Krishna is launched upon an exposition of the Samkhya system which discriminates the attributes of the body and the soul, not on the inculcation of devotion to any God particularly, nor is this pertinent to the discussion. Which 'great God' परमेश्वर then can Shri Krishna particularly have in view? As a matter of fact व्यवसायात्मिका बुद्धिः cannot mean a will to propitiate God भगवत्तोषणात्मिका.

As for the word व्यवसाय, we can consider the following citations:

सत्वं द्रव्ये गुणे चित्ते व्यवसायस्वभावयोः—Hemachandra.

द्रव्यासुव्यवसायेषु। सत्वं—Amara.

षड्गुणो व्यवसायश्च—Chanakya

सर्वथा सदृश सीते मम ह्यस्य कुलस्य च।
व्यवसायमनुप्राप्ता कान्ते त्वय्यतिशोभनं ॥—Valmiki.

Thus व्यवसाय is activity resulting in various kinds of pleasure and pain, or the state of the intelligence

ग्रूयास्तां । यतः पुष्पितवाग्वादिनोऽविपश्चितो वेदवादपरा नान्यदस्तीति वादिनः कामात्मानः स्वर्गपरा जन्मकर्मफलेप्सवो भोगैश्वर्यगतिप्राप्तिकरक्रियाविशेषबहुलवाग्वादिनो भोगैश्वर्यप्रसक्ता इत्यादिविशेषणविशिष्टा अव्यवसायिन एव टीकाकाराणां मते परं श्रीकृष्णेन व्यासेन च एतद्विशेषणानि व्यवसायिष्वेवारोपितानि तत्र का गतिः? टीकाकारमतानुकूला श्रीकृष्णव्यासोक्तिश्चेदत्र "अव्यवसायात्मिका बुद्धिः समाधौ न विधीयते" इति ताभ्यां प्रतिपादितं स्यात्। परं "व्यवसायात्मिका बुद्धिः समाधौ न विधीयते" इत्युक्त्वा व्यवसायात्मिकायां बुद्धौ व्यवसायात्मिकबुद्धिमत्सु वा तानि विशेषणानि न्यस्तानीत्यस्मन्मतं सिद्ध्यते युज्यते चैतदेवात्र ।

which is confused by various circumstances. Nowhere in the Vedas, Upanishads, *philosophical systems, lexicons,* epics etc. is the word व्यवसाय used in the sense of concentration, determinate knowledge of principles or action to propitiate God, but only in the sense of work under different conditions of physical or mental activity. Hence it follows that व्यवसायात्मिका बुद्धिः just means activity of body or soul giving rise to different kinds of pleasure and pain.

Now व्यवसायी is one who has व्यवसाय, follows a particular trade or profession, engaged in several worldly activities, wishful of various kinds of pleasures and enjoyments. And अव्यवसायी is clearly the opposite of this, implying absence of effort, resort to seclusion for peace and contemplation, *control of mind, and nonacceptance of* anything. Shri Krishna tells Arjuna that व्यवसायात्मिका बुद्धिः makes one undertake several enterprises, but is single *i. e.* of one mode and motive. It operates wherever pleasure is sought. E. g. the intelligence which desires enjoyment of woman engages in activity securing that object. Desiring the enjoyment of various worldly pleasures it plunges in operations securing the means therefor; afflicted by poverty, sorrow or disease it endeavours to remove them; desiring heaven it prompts the performance of

sacrifices enjoined by the scriptures; attacked by grief it casts about for something to obviate it. This ever-active intelligence, though in appearance several, is yet of one mode of operation, single in motive and result. It cannot become a means to the knowledge of self or to discriminate the principles of body and soul. Whereas those who have left off worldly-motivated activities physical or mental अव्यवसायिनः, knowers of the truth, seeking no gain, controlled in mind, turned away from limitations, dwelling in seclusion, strangers to *meum* and *tuum*, enjoying transcendent knowledge, refraining from all undertakings, past masters of all scriptures and sciences, possess an intelligence which is many-branched, well versed in all kinds of knowledge, infinite, ineffable to the mind, in possession of the truth, potent in all directions, undeluded and unbewildered.

Thus stating व्यवसायात्मिका बुद्धिः to be subject to various particular activities, Shri Krishna clinches the point in a subsequent verse by declaring व्यवसायात्मिका बुद्धिः समाधौ न विधीयते. *i e* the above-described intellect which is disturbed by every impulse and always resulting in pleasure and pain is not adapted for contemplation, for the yoga which enlightens the principles of body and soul. It is clear then that what Shri Krishna and Vyasa meant by व्यवसायात्मिका बुद्धिः does not support the view of the commentators.

This by itself throws enough light on the word अव्यवसायिन, still one more quotation may be useful:

योगी युंजीत सततमात्मानं रहसि स्थितः ।
एकाकी यतचित्तात्मा निराशीरपरिग्रहः ॥

These attributes qualify one for contemplation, and are conceivable only in a man who is free from all

undertakings.

The intellect of such a free man who has qualified for yogic contemplation is not of any limited scope. The Upanishads and other authorities set forth in detail, as is well known, the extent of the knowledge desired in those who tread the path of yoga, free from all activism and limitation:

> स्थिरदेहोऽभ्यासवशात्प्राप्य ज्ञानं गुणाष्टकोपेतं ।
> प्राप्नोति ब्रह्मपदं न पुनर्भवावासदुःखे च ॥
> तस्माज्जीवन्मुक्तिं समीहमानेन योगिना प्रथमं ।
> दिव्या तनुर्विधेया हरगौरीसृष्टिसंयोगात् ॥

—Shri Govindacharya.

यतो वा इमानि भूतानि जायन्ते···तद्विजिज्ञासस्व, तद् ब्रह्मेति···अन्नं ब्रह्मेति व्यजानात्···तद्विज्ञाय प्राणो ब्रह्मेति व्यजानात्···मनो०···विज्ञानं०···आनन्दो ब्रह्मेति व्यजानात्···सैषा भार्गवी वारुणी विद्या परमे व्योमन् प्रतिष्ठिता । य एवं वेद प्रतितिष्ठति ॥ —Taittiriya Up.

अयं वाव स योऽयमन्तर्हृदय आकाशस्तदेतत्पूर्णमप्रवर्तिनीं श्रियं लभते य एवं वेद । ···महश्चेत्युपासीत चक्षुष्यः श्रुतो भवति य एवं वेद ।··· षोडशं वर्षशतं जीवति य एवं वेद । ···भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ।

लोकेषु पञ्चविधं सामोपासीत । वृष्टौ पञ्चविधं० सर्वास्वप्सु० ऋतुषु० पशुषु० प्राणेषु पञ्चविधं सामोपासीत ॥

यो वा एतदक्षरं गार्ग्यविदित्वाऽस्मिन् लोके जुहोति यजते तपस्तप्यते अंतवदेवास्य तद्भवति ॥ —Chhandogya Up.

अन्धं तमः प्रविशन्ति येऽविद्यामुपासते । ततो भूय इव ते तमो य उ विद्यायां रताः ॥ —Ishavasya Up.

शौनको ह वै महाशालोऽङ्गिरसं विधिवदुपसन्नः पप्रच्छ, कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति ॥ ३ ॥

तस्मै स होवाच । द्वे विद्ये वेदितव्ये इति ह स्म यद् ब्रह्मविदो वदन्ति परा चैवापरा च ॥ ४ ॥

तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति । अथ परा यया तदक्षरमधिगम्यते ।

> यस्याग्निहोत्रमदर्शमपौर्णमास्यमचातुर्मास्यमनाग्रयणमतिथिवर्जितं च ।
> अहुतमवैश्वदेवमविधिना हुतमासप्तमांस्तस्य लोकान् हिनस्ति ॥

—Mundaka Up.

This will show clearly whether the अव्यवसायिनां बुद्धयः should be many-sided and enriched by the knowledge of all sciences principal and *subsidiary*, or of another kind. The activist intelligence is full of limitations, devoid of the knowledge of body and soul, bewildered amidst the pleasures and pains of the world; while that of the opposite kind अव्यवसायिनां बुद्धिः perceives the supreme truth, illumined by transcendent knowledge, fully discerning the principles of soul and body, apt for contemplation, conducive to union with Brahman and endowed with all good qualities.

If Shri Krishna and Vyasa had opined that it is the व्यवसायात्मिका बुद्धिः ("resolute will") which is full of all auspicious qualities like unwavering devotion to God and perception of the truth of the Self, and the अव्यवसायिनां बुद्धिः which is degraded, being devoid of discrimination, unauthoritative, averse to the propitiation of God, possessed by the *profanum vulgus* and vitiated by all other undesirable attributes, they would not have made the statement व्यवसायात्मिका बुद्धिः समाधौ न विधीयते । The commentators ascribe attributes like पुष्पितवाग्वादिन अविपश्चितः वेदवादपराः नान्यदस्तीति वादिनः कामात्मानः स्वर्गपराः जन्मकर्मफलेप्सवः भोगैश्वर्यप्राप्तिकरक्रियाविशेषबहुलवाग्वादिनः भोगैश्वर्यप्रसक्ताः etc to men *without* व्यवसाय, but it is the men of व्यवसाय who are thus described by Shri Krishna and Vyasa. What then are we to conclude? If Shri Krishna and Vyasa were of the same opinion as the commentators they would have declared "अव्यवसायात्मिका बुद्धिः समाधौ न विधीयते ।" But since by the text व्यवसायात्मिका बुद्धिः समाधौ न विधीयते those attributes are ascribed to the intelligence characterised by व्यवसाय or to men of such intelligence, our view is borne out and it alone fits in with the context.

यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ॥
वेदवादरताः पार्थ नान्यदस्तीति वादिनः ॥ ४२ ॥
कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदाम् ॥
क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति ॥ ४३ ॥

येषां व्यवसायात्मिका विविधसांसारिक-लौकिकवैदिकादिकर्मभिः सुखप्राप्तिदु:खविनिवर्तनात्मकव्यवसायपरायत्ता बुद्धिरस्ति ते, अविपश्चितः देहात्मैक्यरूपज्ञानाः वेदवादपराः वेदानामन्तिमध्येयरूपरहस्यात्मकयाथार्थ्यज्ञानमुज्झित्वा केवलं वेदप्रोक्तविविधैहिकामुष्मिकलाभप्राप्तये तत्क्रियाकर्मसंबंधिवादेषु परायणाः प्रवृत्ता इहामुत्रैश्वर्यस्वर्गप्राप्तावेव जन्मकर्तव्यं मन्यमानास्तद्विरहितमन्यत्र किंचिदस्तीति वादिनो वक्तारस्तत्प्रतिपादयन्तोऽत एव कामात्मानो विविधाभिलाषसिद्ध्याकांक्षिण ।

मुण्डकोपनिषदि यथा "कामान्यः कामयते मन्यमानः स कामभिर्जायते तत्र तत्र ॥ पर्याप्तकामस्य कृतात्मनस्त्विहैव सर्वे प्रविलीयन्ति कामाः ॥ २ ॥"

कामान्ये कामयंते ते च कामात्मानो मनुष्यास्तत्तत्कामदृष्टाऽदृष्टधर्माधर्मप्रवृत्तिहेतुभिः कामैः सहैव तत्र तत्र तत्तत्कामावाप्तये जायन्ते उत्पद्यन्ते। अर्थात् उपर्युक्तफलदायिन्यः क्रियास्तत्तत्फलप्रदानादनंतरं नाशधर्मिण्य एवं स्वर्गप्राप्त्यनंतरमपि क्षीणे पुण्ये पुनश्च मृत्युलोके ते जन्माप्नुवन्ति। अतः कामात्मानो वेदप्रतिपादितकामाऽभिलाषमनोरथसिद्धिमुग्धाः सन्ति । स्वर्गपराः स्वर्गप्राप्तिरेवेति कर्तव्यंमन्याः । जन्मकर्मफलेप्सव· जन्मारभ्य क्रियमाणानि यानि कर्माणि तेषां

43–44 O Arjuna, those whose will is worldly, seeking pleasure and avoiding pain, who do not understand the esoteric teaching of the scriptures, who cling to the Vedic texts of praise ( Arthavada ) promising heavenly pleasures etc. and say that only those texts convey the supreme truth, who are eager to obtain the fulfilment of various desires, avid of heaven, who desire the fruits of all kinds of actions they have been performing since their birth, who are devoted to the performance of the various ceremonies and rites for the attainment of pleasures and lordship—such ignorant persons utter the attractive speech of the Veda promising excellent rewards . (They falsely argue that the only object of human existence lies in performing various Vedic ceremonies,

भोगैश्वर्यप्रसक्तानां तयाऽपहृतचेतसाम् ॥
व्यवसायात्मिका बुद्धिः समाधौ न विधीयते ॥ ४५ ॥

फलाभिलाषिणः यल्लौकिकदैवपित्र्यादिकृतकर्मणां फलाकांक्षिणः एतादृशा व्यवसायात्मिकबुद्धिसम्पन्ना जनाः, क्रियाविशेषबहुलाः क्रियाः विविधफलप्राप्तये क्रियमाणानि कर्माणि तद्रूपाः तासां विशेषाः भिन्नभिन्नफलप्राप्तये भिन्नभिन्नप्रकारास्ते यत्र बहुलाः सन्ति तादृशीभोगैश्वर्यगतीः ऐश्वर्यधनराज्यस्त्रीपुत्रस्वर्गादिरूपा या गतयः प्राप्तिप्रवृत्तयः यासां ताः प्रति यां इमां वाचं बुद्धिं पुष्पितां कृत्वा प्रवदन्ति अर्थात् या इयं वाक् वाणी बुद्धिर्विशेषतस्तु सांख्यज्ञानात्मिका एव सैव ब्रह्मप्राप्तिकरी ब्रह्मैक्यविधायिनी देहात्मबोधकरी मनुष्यजन्मनोऽतिमध्येयरूपा क्वास्ति सा वेदादिप्रतिपादिता वाक् क्रियाविशेषबहुला भोगैश्वर्यगतिप्रापिका एवास्तीति इत्युक्तविशेषणविशिष्टा व्यवसायात्मिकबुद्धिमन्तो मनुष्याः प्रवदन्ति प्रवादं विवादं मिथ्यावादमेव वदन्ति । अर्थात् वेदप्रतिपादिका ह्यामुष्मिकसिद्धिकरक्रिया अनुकरणीयाः परं तासु क्रियास्वेव सर्वं सम्पन्नं समाप्तं नान्यत्तदतिरिक्तमैश्वर्यस्वर्गप्राप्त्यन्तरा मानवकर्तव्यमिति मतिर्न युक्ता । वेदैस्तदेव न प्रतिपादितं परं स्वर्गप्राप्त्यग्रेऽपि सांख्यज्ञानमार्गेण ब्रह्मैक्यावाप्तिरेवान्तिमं परमं सुखं ध्येयं चेति । यतस्तद्ब्रह्मरूपिपुरुषादेव सर्वे वेदा यज्ञस्वर्गादिलोका. सूर्यादिग्रहा इन्द्रादिदेवाः प्रसृताः । यस्मिन्पुरुषरूपिणि ब्रह्मण्येव द्यौः पृथिव्यन्तरिक्षं सर्वाणि च प्रतिष्ठितानि ।

rites, and sacrifices and thereby gaining heaven where various pleasures and lordship may be enjoyed, whereas the final word of the Veda enjoins the knowledge leading to the highest bliss of union with the Supreme.)

45 The worldly intellect of those whose minds are fascinated by that speech of the Veda promising *excellent* rewards, and who cling to pleasures and lordship, is of no use in yogic contemplation.

(To qualify for contemplation one must give up undertakings resulting in pleasures of this world or the next, make the body long-lived and *capable of enduring* cold, rain, sun etc. by the use of mercurial preparations **सिद्धरससेवनेन** and eliminating from the mind all desire for enjoyment here or elsewhere, remain constantly in the Samkhya knowledge.)

त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन ॥
निर्द्वंद्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् ॥ ४६ ॥

---

यथा मुण्डकोपनिषदि—

यस्मिन्द्यौः पृथिवी चान्तरिक्षं मनः सह प्राणैश्च सर्वैः । तमेवैकं जानथ आत्मानमन्या वाचो विमुंचथामृतस्यैष सेतु. ॥५॥ पुनश्च—

न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ॥१०॥

ऐहिकैश्वर्यं स्वर्गलोकं वा परं सुखसाधनमन्तिमं ध्येयं मन्यमाना मन्दधिय एव । ब्रह्मपदं तु स्वर्गादपि परं स्वर्गादिलोका यस्मिन्नेव प्रतिष्ठिता यद् ब्रह्मपदं न सूर्यो न चंद्रो न तारका न विद्युतो वा भान्ति यस्य ब्रह्मण एव भासा सर्वं विभाति तत्प्राप्तिरेव ध्येयं । परं व्यवसायात्मिकधियां धियस्त्वैहिकसुखस्वर्गसुखेष्वेव पर्यवसितास्तन्नोचितं । भोगैश्वर्यप्रसक्तानां सांसारिकसुखवैभवविलासैश्वर्यभोगासक्तचेतसां तथा तया पुष्पितया विविधफलश्रुतिप्रतिपादिकया वाचाऽपहृतचेतसामाकृष्टान्तःकरणानां तेषां व्यवसायात्मिकबुद्धिमतां मनुष्याणां व्यवसायात्मिका बुद्धिः व्यवसायेषु विविधसुखप्राप्तिसाधनरूपेषु प्रवृत्ता बुद्धिः समाधौ न विधीयते समाधियोग्या न भवति तस्या बुद्ध्याः समाधौ नोपयोगः तया बुद्ध्या युतः पुरुष समाधिद्वारा ब्रह्मपदमवाप्तुं न शक्नोति अतः समाधियोग्यताप्राप्तये ऐहिकामुष्मिकसुखप्राप्तिरूपव्यवसायांस्त्यक्त्वा शीतवर्षातपसहं सिद्धरससेवनेन दीर्घायुष्कं शरीरं कृत्वा मनश्चैहिकामुष्मिकसुखतृष्णाविरक्तिं विधाय सांख्यज्ञानपरा समाधियोग्या भवंति ॥ ४३-४४-४५ ॥

पूर्वोक्तवेदवादपराणां वैदिककर्माणि विहाय नान्यत्किंचिदस्तीति वादिनां यावज्जीवं वैदिककर्मसु प्रवृत्तानां तत्कर्मलब्धभोगैश्वर्यादिसुखसक्तानां जनानां व्यवसायात्मिका बुद्धिः समाधियोग्या न भवतीति वचनानि दृढयन् समाधियोग्यस्थितिमनुवर्णयन् श्रीकृष्णः पुनरपि त्रैगुण्येत्यादिना वदति—

हे अर्जुन वेदा ऋग्यजुःसामाथर्वाख्याश्चत्वारो वेदास्तु त्रैगुण्यविषया एव, त्रैगुण्यं सत्वरजस्तमांसि त्रयोगुणास्तै क्रियमाणानि विविधलौकिकवैदिककर्माणि यस्मिंस्तत् जगत् तस्योपयोगिनः सेव्या विविधकर्मरूपा विषया येषु ते

46 The four Vedas are connected with the three principles of goodness, passion and ignorance. O Arjuna, be thou above these three principles. Be above the pairs of opposites, resort to the principle of goodness, give up the tendency of acquisition, preservation and enjoyment of worldly things and be self-possessed always.

तादृशा वेदाः सन्ति अर्थात् लौकिकवैदिककर्मपर्यवसितास्तादृङ्मनुष्येभ्यो बन्धका एव, अर्थात् ऐहिकामुष्मिकविविधभोगैश्वर्यसुखस्वर्गप्राप्तिकामनया क्रियमाणानि वेदप्रतिपादितानि कर्माणि बन्धकानि यथा च

मुण्डकोपनिषदः—

अविद्यायां बहुधा वर्तमाना वयं कृतार्था इत्यभियन्ति बालाः ॥ यत्कर्मिणो न प्रवेदयन्ति रागात्तेनातुराः क्षीणलोकाश्च्यवन्ते ॥

इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः ॥ नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वेमं लोकं हीनतरं वाऽऽविशन्ति ॥ २, ९-१० ॥

अनेन प्रकारेण त्रिगुणावृतं त्रिगुणमयं त्रिगुणोत्पत्तिस्थितिलयात्मकमेव विश्वं तद्व्यवहारदर्शका विषया येषु ते वेदा विशेषतः सन्ति परं त्वं समाधियोग्यस्थितिप्राप्तये निस्त्रैगुण्यः जगतः परो भव सत्वरजस्तमोगुणेभ्यो मिश्रितेभ्यो न्यूनाधिकमध्यमादिभेदपरायत्तप्रकृतिरूपेभ्य परो भिन्नो भव। वेदाश्च विविधमनोरथपूर्त्युत्सुकानां हर्षशोकेच्छाद्वेषस्वपरभावपरायत्तधियां बन्धका वैदिककर्माणि च बन्धकानि न विगलितकर्मफलाभिलाषिणां ब्रह्मैकलक्ष्याणां। अतस्त्वं त्रिगुणात्मकजगत्स्थितजनोचिताज्ञानभावविरहितो भव। त्वं वेदवेत्ता सर्वशास्त्रपारगः सन् सामान्यत्रिगुणावृतेतिह्यमनुष्योचितस्वपरबुद्धिमिच्छाद्वेषादिर्द्वंद्व बुद्धिं विहाय वेदप्रतिपादितानि वैदिकानि चातुर्वर्ण्योचितानि क्षत्रियधर्मानुकूलानि कर्माणि ब्रह्मैक्यधिया कुरु।

निस्त्रैगुण्यो भव सत्वरजस्तमोगुणाभिभूतप्रकृतिको मा भव तेन निर्द्वंद्वो हर्षशोकेच्छाद्वेषसुखदुःखादिद्वंद्वभावविरहितो भविष्यसि। ततो नित्यसत्वस्थ. नित्यं यावज्जीवं रजस्तमोभ्यामनभिभूय सत्वगुणप्रकृतिको भविष्यसि। ततो निर्योगक्षेमो भविष्यसि योगक्षेमचिन्ताविरहितः "तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहं॥" अनेन प्रकारेण परब्रह्मरूपो महेश्वरः परमात्मैव सर्वस्य मम च योगक्षेमनिर्वाहकः। *कथमहं राज्यं प्राप्नुयां तद्रक्षणं च कथं भविष्यतीत्यादियोगक्षेम*चिन्ताविरहितो भविष्यसि ततश्च आत्मवान् आत्मज्ञानी ब्रह्मैक्यबुद्धिर्भविष्यसि क्रमशश्चोच्चपदमनुभवन्नन्ते त्वं परां आत्मरूपामस्मदिष्टदेवतामहेश्वरैक्यभावात्मिकां गतिमनुभविष्यसि ॥४६॥

Shri Krishna confirms here the assertion that the activist intelligence of those who are attached to the enjoyment brought by their life-long rituals (since above these there is nothing according to them), is not adapted for contemplation. He elaborates too the state wherein such contemplation is possible: The four scriptures Rik, Yajus, Saman and Atharvan deal with

subjects coming under the three qualities (*Gunas*) These qualities *Satva, Rajas* and *Tamas* may be rendered as Goodness, Passion and Darkness respectively and they characterise all religious and secular activities. Hence the rituals act as a bondage for those who observe them by desire for the various pleasures of this world and the next, as saith the *Mundaka Upanishad* (2, 9-10)

अविद्यायां बहुधा वर्तमाना वयं कृतार्था इत्यभियन्ति बालाः । यत्कर्मिणो न प्रवेदयन्ति रागात्तेनातुराः क्षीणलोकाश्च्यवन्ते ॥

इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः । नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वेमं लोकं हीनतरं वाऽऽविशन्ति ॥

Especially the Vedas show up worldly things which have their origin, existence and end in the three qualities But you should transcend the qualities and the world and thus qualify for Yogic contemplation. You should be beyond the ever-mixed Gunas which manifest themselves as Nature subject to differences of increase, decrease and stagnation. The Vedas and Vedic rituals bind those whose intelligence is subject to feelings of exultation and grief, desire and aversion, 'mine' and 'another's' and who are all for the carrying out of their several plans—they do not bind those whose desire for action's fruit has dropped off and whose sole aim is the Supreme. So you should give up the ignorant attitude of worldly men who are dominated by the qualities. You have studied the scriptures and all sciences thoroughly, so you should abandon the egotistic and dualistic attitude of ordinary folk and perform your duty as a warrior as instructed by the scriptures which prescribe the conduct of all classes and stages of life, but with your intellect fixed in the one Supreme.

यावानर्थ उदपाने सर्वतः संप्लुतोदके ॥
तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥ ४७ ॥

वैदिककर्माणि तु यावदुपयुक्तानि वर्णाश्रमधर्मोचितानि करणीयान्येव न मुमुक्षोरपि तानि त्याज्यानीत्युद्दिश्य कथयति। यथा पुरुषस्य सर्वतः सर्वदिक्षु संप्लुतोदके विस्तृतजलनिभृते जलाशये उदपाने जलपाने यावान् अर्थः यावदुपयोगस्तदेव तत्पर्याप्तं फलं। जलपानानन्तरं विस्तृतजलाशयस्य विपुलजलस्य नोपयोगः। जलं तु पातुमर्हं पानोचितं न किंचिदपि दोषाविष्टं केवलं शुद्धं पानोपयोगि परं जलपाने यावदर्थः स तु संपादितस्तृषा निवारिता तदनंतरं तत्सुमधुर शुद्धस्वच्छोपयोग्युत्तमबहुलजले विद्यमाने पि तस्य क उपयोग.? न कोपि। तथैव वेदा विविधैहिकामुष्मिकसिद्धिप्रदविविधकर्मोपदेष्टार. सन्तोऽपि विजानतः सर्ववेदशास्त्रपारगस्य तत्त्वज्ञाननिष्ठचित्तस्य ब्राह्मणस्य ब्रह्मपरायणस्य वेदोपदिष्टानां विविधकर्मणां यावद्व्यवहारोपयोगः साधुर्नो यावज्जीवमन्तिमघटिकापर्यंतमन्यत्सर्वं परित्यज्यं

'Devoid of qualities' निस्त्रैगुण्य means devoid of the nature which is subject to the three qualities Becoming such you will be निर्द्वन्द्व unaffected by the pairs of opposites like exultation, sorrow; desire, repulsion; pleasure, pain etc Then you will be नित्यसत्त्वस्थः always good, never under the sway of passion and darkness. Hence you will be free from the anxiety for acquisition and conservation निर्योगक्षेमः With the faith that it is the Lord who takes care of yourself and the whole world—as He says "तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहं ॥"—you will no longer be troubled by cares like "How can I win the kingdom? How is it then to be protected ?" Thus you will become आत्मवान् possessed of the Self, knower of your self, unified in consciousness with the Supreme. Gradually ascending these high stages you will in the end attain the supreme goal, be united with the Self who is none other than our favourite Lord.

47 All the Vedas are as useful to a knowing Brahmin, as is (a tank) surging with water on all sides when one is thirsty.

कर्मण्यस्त्वधिकारस्ते मा फलेषु कदाचन ॥
मा कर्मफलहेतुर्भूर्मा ते संगोऽस्त्वकर्मणि ॥ ४८ ॥

---

ब्रह्मैक्यप्राप्तिमार्गमननुसृत्य केवलं वेदोक्तविविधकर्मपरायणपूर्वकं जीवननिर्वाह उचितो नो वा शक्यः । अर्थात् वेदोदितानि विविधकर्माणि ब्रह्मपरायणमनस्कैर्मनुष्यैर्नित्यनैमित्तिकानि यावदुपयोगं करणीयानि ॥ ४७ ॥

तेऽधिकारः कर्मणि यावज्जीवं यदा यच्चापतितं तत्तत्कर्मण्यधिकारस्तत्तत्कर्म कर्तुमेवाधिकारस्ते परं तत्फलप्राप्तिकामनायां ते नाधिकारः नो सत्ता। मनुष्यकृतकर्मफलदानशक्तिस्तु महेश्वरस्यैव न मे न ते तर्हि मयेमानि कर्माणि कृतानि कृत्वा चैतानि फलान्युपलब्धानीति मोहस्तु बन्धनकर एव तस्मात्वं कर्म-

*Just so much of Vedic ritual is to be observed as* is necessary in one's caste and stage of life It should not be abandoned altogether, even by an aspirant for release. So Shri Kr shna says: A lake may be over-flowing on all sides, but one requires only so much of it as will quench one's thirst (उदपाने जलपाने). Afterwards one has on need of all that expanse of water. The water may be pure and sweet and potable, but it is all useless beyond fulfilling the object of slaking one's thirst. Similarly the Vedas prescribe different rites for securing the several enjoyments of earth and heaven; but to one learned in scriptural and secular books (विपश्चितः) and steadfast in the Brahman (ब्राह्मणस्य). it would be proper to observe just so much of that ritual *as can be accommodated in* his own daily conduct. For him it would be as inappropriate as it would be impossible merely to go through the several Vedic rites to the last breath of his life, attending to nothing else, not even the pursuit of union with Brahman ! Thus, a man ardent for the Supreme will accept those of the daily and occasional rites mentioned in the Vedas as he judges useful to him.

48 Let your concern be only with action, never with its reward. Let not the reward of action be your

योगस्थः कुरु कर्माणि संगं त्यक्त्वा धनंजय ॥
सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥ ४९ ॥

---

फलहेतु मा भूः कृतकर्मफलाकांक्षी कृतकर्मफलप्राप्तिकामो मा भूः मा स्याः। तथा कृतकर्मफलत्याग एव कर्तव्यं चेत् कर्मपरिहार एव वरमित्यपि माऽचभंस्थाः। अर्थात् अनया बुद्ध्या ते अकर्मणि संगस्तु संगोऽपि कर्मराहित्यं कर्माऽप्रवृत्तिरपि मा स्यात्। अर्थात् कर्माणि तु यावज्जीवं यदा यान्यापतितानि तानि संपादयन्नेव जिजीविषेः केवलं तत्कृतकर्मफलत्यागभावनापूर्वकमेव ॥ ४८ ॥

हे धनंजय अर्जुन योगस्थः योगयुक्तचित्तो भूत्वा संगं त्यक्त्वा कर्मफलावाप्तिवृत्तिं परित्यज्य कर्माणि यदा यानि प्राप्नुयुस्तानि सिद्ध्यसिद्ध्योः समो भूत्वा कृतकर्मफलसिद्ध्या न हर्षो न विषादश्चाऽसिद्ध्या तथा द्वंद्वातिरिक्तो भूत्वा यदृच्छयोपपन्नानि पूर्वजन्मानुबन्धीनि कर्माणि कुरु। समत्वं सुखदुःखादिद्वंद्वभावप्रशमो वृत्त्यवैकल्यं मनोनिग्रहः स एव योग उच्यते तत्र योगे स्थितः योगयुक्तचित्तो भूत्वा सांप्रतं समरोचितानि कर्माणि कुरु ॥ ४९ ॥

motive. Do not be attached to inaction.

As long as you live you are entitled to carry out whatever (and whenever) duty befalls. But you are not entitled to wish for the acquisition of its consequence. It rests with God, not you or me, to bestow the reward of men's actions So any ignorant thought like "I have done these deeds, I have acquired these results" will work only for bondage. Do not then *desire* the enjoyment of the fruit of your action. But do not think it better to abstain from all action on the score that the fruit thereof is to be relinquished ! That is, see that this teaching does not lead you to inaction ( inertia ). Thus all your life long you should endeavour to perform your duties as they arise, only keeping in your mind the attitude of relinquishment of their results.

49 Perform action, O Arjuna, by fixing your mind in Yoga without attachment (to the result), thinking success and failure as equal. (That is, perform action with such an attitude that your mind is not affected

यस्य सर्वे समारंभा निराशीर्बन्धनास्त्विह ॥
त्यागे यस्य हुतं सर्वं स त्यागी स च बुद्धिमान् ॥५०॥

---

इह संसारे यस्य तु योगस्थस्य योगाधिकारसम्पन्नस्य पुरुषस्य सर्वे समारंभाः सर्वकर्मसु सर्वकालमनिवर्तिन्यो विविधप्रवृत्तय. अवश्यंभाविनो भावाः प्राक्तनकर्मानुबन्धेन क्रियमाणा विविधक्रियारंभाः निराशीर्बन्धना भवन्ति। आशीः भोगैश्वर्यवैभवस्वर्गाद्याकांक्षास्तदेव बन्धनमस्वातंत्र्यं आशीर्बन्धनं, निर्गतं विगलितं नष्टमाशीर्बन्धनं येषु ते निराशीर्बन्धना ऐहिकामुष्मिकभोगैश्वर्याभिलाषविरहितास्तादृशा. यस्य सर्वे समारंभा। त्यागे त्यागरूपिणि यज्ञे यस्य पुरुषस्य सर्वं हुतं, य. शुभमशुभं सुखदुःखद्वंद्वरूपं कृतं कर्म सर्वं त्यागबुद्ध्या नाहं कर्ता नाहं भोक्तेत्यभिमानव्यतिरिक्तधिया सर्वं ब्रह्मणेऽर्पयिता कर्मानुष्ठाता स पुरुष एव त्यागी न च क्लेशभिया कर्माण्यकुर्वन्त्यजन्कर्मत्यागादिमात्रज्ञानवान्वा त्यागीति कथ्यते। ईदृशो यथार्थज्ञानवान् त्यागी एव बुद्धिमान् यथार्थब्रह्मज्ञानबुद्धिसम्पन्नः यथार्थबुद्धियुतोऽस्ति भवति कथ्यते च। या च यथार्थज्ञाननिपुणा बुद्धिरेव पुरुषं तारयति मार्गदर्शिनी वा भवति ॥५०॥

either by pleasure or pain at its success or failure). Yoga is said to be equability (remaining undisturbed by the pairs of opposites like pleasure and pain, joy and grief)

Transcending the qualities, one should perform whatever duty presents itself from time to time in consequence of action done in previous lives. So now you have to prepare yourself to fight, fixing your mind in Yoga.

50 That man is a relinquisher and is wise, all whose activities are free from the bondage of desire and who has sacrificed his all in (the fire of) renunciation.

The man who has qualified for Yoga is said to practise relinquishment if whatever he has got to do in this world from time to time (as a result of actions in previous lives) is free from the binding desire for pleasure and prosperity on earth or in heaven. All his

दूरेण ह्यवरं कर्म बुद्धियोगाद्धनंजय ॥
बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ॥५१॥

---

निराशीर्वन्धनरूपसमारंभवतस्त्यागिनो बुद्धिमहत्तां संपाद्यातःपरं तत्त्यागिजनबुद्धिरेव सर्वार्थसाधिकेति संपादयन्नाह दूरेणेति—हे धनंजय अर्जुन उपर्युक्ता निराशीर्वन्धनसमारंभस्य त्यागिपुरुषस्य यादृशी बुद्धिस्तद्बुद्धियोगात् तादृशबुद्धिप्राप्त्या हि अवश्यं अवरं कर्म दूरेण, अधमं यत्कर्म लोके व्यवहारे वा स्थूलधियां बुद्धौ वाऽधमं कथ्यते तदधमं त्यागधूरया कर्तृत्वेन तदधमं कर्म दूरेण दूरीभवति । अर्थात् ब्रह्मार्पणधिया क्रियमाणानि कर्माण्यप्यधमानि चेत् त्यागबुद्धिमतो जनस्य न तेन संपर्कः स तु ततो निर्लेप एव भवति । अथवा त्यागबुद्ध्या योगी शुभानि आत्मनो जगतश्च कल्याणकराण्येव कर्माणि करोति अवराण्यधमानि कर्माणि तु ततो दूरीभवन्ति। अतस्त्वं बुद्धौ स्वबुद्धौ स्थितं ब्रह्मरूपिणं महेश्वरं शरणं अन्विच्छ प्रार्थयस्व, तादृशबुद्धिप्राप्तये भगवंतं शंकरं शरणं व्रज स ते फलाकांक्षाविरहितां बुद्धिं दास्यति। फलहेतवस्तु कृपणा एव; फलमेव फलप्राप्तिरेव हेतुर्येषां ते तादृशा जनाः फलहेतव. फलप्राप्तावेवेतिकर्तव्यतां जन्मसाफल्यं मन्यमाना मनुष्यास्तु कृपणा. दीना अकिंचनाः सम्मुखोपस्थितमुक्ताराशिमज्ञानेन तज्ज्ञानाभावेन परित्यज्य कपर्दिकालाभसंतुष्टा एव। अर्थात् ब्रह्मरूपिमहेश्वरसारूप्यबुद्धिप्राप्तिकरज्ञानं विहाय विविधकाम्यकर्मसंतुष्टाः कृपणा एव फलहेतूनां कृपणानां न योगयुक्ता बुद्धिर्भवति न वा बुद्धियोगः संपद्यते ॥ ५१ ॥

action good or bad, characterised as entailing pleasure or pain, should be offered as an oblation in the sacrifice of renunciation, consecrated to the Supreme, without any egoistic idea like 'I am the doer, I am the enjoyer.' Only such a worker can be considered a relinquisher, not one who renounces actions themselves through fear of their being difficult (painful) or under the notion that it is action itself which has to be relinquished. The relinquisher with such correct knowledge is alone wise and understands the Brahman properly. Only this true understanding can guide a man to transcendence.

51 By the Yoga of (such an) understanding, lower action is obliterated. Take refuge in the (Lord within.

your) understanding. They are to be pitied who are prompted by (the desire of) reward.

Having established the superiority of the intelligence of the relinquisher whose activities are free from the bondage of desire, the Lord proceeds to show that that intelligence accomplishes everything. "Arjuna, whatever is considered in the world a low kind of action surely becomes far removed (दूरेण = दूरीभवति) by the Yoga (or by the acquisition) of the above described understanding. That is, even if the actions offered by the intelligence to the Supreme happen to be of 'low' type, the relinquisher remains unstained by them. Or else (alternatively) the Yogin of the relinquishing intelligence does only such deeds as are good for his self and the world: evil actions flee from him. Therefore take you shelter in the Lord who is Brahman abiding in your intelligence. Pray to Shiva for such an understanding. He will bestow it on you free from all hankering after results.

But those who are result-motivated are indeed lowly. They think their life is useful only if they can show results. They are mean, poverty stricken, ignoring the heap of pearls before them and grabbing at a pie. In other words, they do not go in for the knowledge which would assimilate them to the great Lord who is none other than the Supreme Spirit, but are satisfied—this ragged crew—with the fruits accruing from actions prompted by various desires. The low class of men who are motivated by result cannot acquire the intelligence wedded to Yoga: they cannot attain *Buddhi-Yoga* (the Yoga which has the intelligence as its basic instrument)

बुद्धियुक्तो जहातीमे उभे सुकृतदुष्कृते ॥
तस्माद् योगाय युज्यस्व योगः कर्मसु कौशलं ॥५२॥

---

बुद्धिप्रेरकमहेश्वरकृपया योगयुक्तबुद्धिप्राप्तिर्भवतीत्युक्त्वा ततस्तत्फलमनुवर्णयन्बुद्धियोगेऽर्जुनं प्रेरयन्नाह।

बुद्धियुक्तः योगबुद्धियुतो मनुष्य इमे सिद्ध्यसिद्धिरूपे उभे सुकृतदुष्कृते पुण्यपापे जहाति परित्यजति अर्थात् योगयुक्तबुद्धिमन्तो जना ब्रह्मरूपमहेश्वरैक्यभावात् सुकृतात्पुण्यप्राप्तिं दुष्कृतात्पापप्राप्तिं नानुभवन्ति द्वन्द्वाभावाद् द्वन्द्वभावजन्यफलान्निर्लेपा एव ते। तस्मात् कारणात् त्वं अपि योगाय युज्यस्व बुद्धियोगयुक्तो भव येन ते मनसि समुद्भूता स्वजनवधस्मरणपरितप्ता युद्धपरावर्तिनी पापबुद्धिः समत्वबुद्ध्या विनिवृत्ता स्यात्। कर्मसु संसारव्यवहारोचितेषु क्रियमाणेषु सर्वकर्मसु योगः सिद्ध्यसिद्धिसमत्वबुद्धिरूपो यो योगः सुकृतदुष्कृतनिवृत्तिसाधनरूपः स एवात्मसाक्षात्कारमार्गदर्शकः परमं कौशलं विद्वज्जनोचितं बुधैरभिमतं चातुर्यं बुद्धिमत्ता प्रोच्यते ॥५२॥

52 One who is endowed with this Yoga of the intellect, abandons both merit and evil Therefore be united with this Yoga. Yoga is proficiency in (the performance of) actions.

Promising the attainment of the Yoga of the intellect by God's grace, the result of such attainment is now described as an incentive for Arjuna to take up that Yoga Fixed in that Yoga, one is united with Brahman and hence unaffected by the effects good or bad of the actions one performs. So take up the Yoga, whereby the attitude of equality will efface the mentality agitated by the prospective sin of the slaughter of your kinsmen The Yoga which is unconcerned with the nature of results will point the way to self-realisation and to the right performance of action in the world as recommended by the wise.

कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ॥
कर्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥ ५३ ॥
यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति ॥
तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥ ५४ ॥
श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला ॥
समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ॥ ५५ ॥

---

यतः बुद्धियुक्ताः योगयुक्तत्वेन समत्वबुद्धिसंयुताः सिद्धा मनीषिणः विद्वांसः कर्मजं फलं त्यक्त्वा कृतकर्मफलाभिलाषविरहिता भवंति तदा हि अवश्यं कर्मबंधविनिर्मुक्ताः कृतकर्मबंधविरहिताः सन्तः अनामयं सर्वदुःखप्रशमनं ब्रह्मानंदैकमयं पदं महेश्वरस्थानं ब्रह्मैक्यभावं गच्छन्ति प्राप्नुवन्ति ॥ ५३ ॥

यदा ते तव बुद्धिर्मोहकलिलं मोहोत्पन्नं देहात्मज्ञानव्यतिरिक्तं मतिभ्रमं व्यतितरिष्यति व्यतिक्रमिष्यति तदा श्रोतव्यस्य अभिलष्यमाणस्य श्रवणीयस्य श्रोतुं योग्यस्य श्रुतस्य शास्त्रस्याऽऽगमस्य श्रवणेच्छाकरभावस्य, शास्त्रस्योभयस्यापि निर्वेदमासक्तिराहित्यं वैराग्यं गंतासि प्राप्स्यसि अर्थात् संसारे मोहव्यतिरिक्तबुद्धीनां स्वपरभावहीनानां सर्वत्र ब्रह्मैक्यमयदृष्टिपूर्वकं कर्म कुर्वतां न श्रोतव्यस्य श्रुतस्य चोपयोगः ॥ ५४ ॥

सांप्रतं तु ते बुद्धिः श्रुतिविप्रतिपन्ना श्रुतिभि. वेदादिशास्त्रैः विप्रतिपत्तिमापन्ना श्रुत्यादिप्रतिपादितधर्मेषु संकल्पविकल्पविकला विकृतियुता ते बुद्धिरस्ति। सा ते बुद्धिः यदा युद्धानंतरं राज्यैश्वर्यभोगपरिणतौ संसारोपरमकाले वा यदा

53 The wise, who resort to the Yoga of the will renounce the ( desire for the ) reward of act on and being freed from the bondage of action, go to the blissful abode ( viz. union with Brahman ).

54 When your mind crosses the tangle of delusion, you will attain to indifference as to what should be heard and what has been heard from the scripture.

The 'delusion' is confusing the body with the soul. If one is undeluded, working unselfishly in the Brahmic consciousness, no more need remains for scriptural instruction already obtained or not yet obtained.

55 When your mind, unsettled by the various scriptural texts, stands unmoved and steady ( as ) in

अर्जुन उवाच

स्थिरप्रज्ञस्य का भाषा समाधिस्थस्य केशव ॥
स्थिरधीः किं प्रभाषेत किमासीत व्रजेत किं ॥ ५६ ॥

---

कदाचिदस्मिन्कस्मिंश्चित्काले वा निश्चला दृढैकाग्रा चांचल्यरहिता सती समाधावचला यथा स्यात्तथा स्थास्यति स्थिरीभूता भविष्यति तदा त्वं योगं योगयुक्तबुद्धिं द्वंद्वभावजन्यवैकल्यविरहितबुद्धियोगं ब्रह्मरूपमहेश्वरैक्यमवाप्स्यसि प्राप्स्यसि। ते अविद्यापरिहारेण स्वजनवधादिदोषबुद्धिपरिहारो भविष्यति ॥ ५५ ॥

- अर्जुन उवाच

श्रीकृष्णेन निश्चलाऽचलस्थिरबुद्धिमते यद्य समाधियोग्यत्वं प्रतिपादितं तदनुसृत्येयमर्जुनस्य प्रश्नावलिः स्थिरेति—

हे केशव श्रीकृष्ण, स्थिरप्रज्ञस्य समाधिस्थस्य निश्चलाचलसमाधिस्थिरीकृतबुद्धिर्योगयुक्तस्तस्य का भाषा का व्याख्या किं स्वरूपं कथं प्रतिपत्तिर्वा तस्य ? स्थिरप्रज्ञोऽयं शब्दो रूढो वा विशिष्टक्रियाऽऽचरणादिभिरन्वर्थकत्वमावहति वेति तत्स्वरूपलक्षणनिरूपणं भवतः श्रोतुमीहे (इति १ प्रथमः प्रश्नः)। पुनश्च स्थिरधीः स्थिरबुद्धिर्योगी किं प्रभाषेत ? शुभाशुभफलप्रदद्वंद्वाभ्युपगमे किंप्रकाराणि कीदृशानि वचनानि कस्मात्केन हेतुना वाऽन्यैर्वदति ? (इति २ द्वितीयः प्रश्नः)। पुनश्च स स्थिरधीः स्थिरबुद्धिः किमासीत कथंप्रकारेण केन विधिना किं कृत्वा केन साधनसाहाय्येन वा आसीत किमभ्यस्येत् ? स्थिरीभूत्वैकांतस्थितः स्थिरासनो भूत्वा वा (इति ३ तृतीयः प्रश्नः)। पुनश्च स्थिरधीः स्थिरबुद्धिः साधनैरेतैः सिद्धयोगयुतबुद्धिर्योगी व्रजेत किं ? किं फलमाप्नुयात् ? (इति ४ चतुर्थः प्रश्नः) ॥ ५६ ॥

contemplation, then (after obtaining sovereignty at the end of the war or at the fall of the world-consciousness) will you have attained Yoga. (of the intelligence, effacing ignorance and the consciousness of sin.)

*Arjuna said:*

56 What is the speech of him whose mind has become steady in contemplation, O Krishna ? How does the steady-minded talk, sit and walk ?

भाषा ('speech') might stand here generally for 'characteristics', 'description'. 'Talk' when the pairs of opposites, giving dual fruits, occur; or for any other reason or occasion. 'Sit' implies, How does he practise

श्रीकृष्ण उवाच

प्रजहाति यदा कामान् सर्वान्पार्थ मनोगतान्
आत्मन्येवात्मना तुष्टः स्थिरप्रज्ञस्तदोच्यते ॥ ५७ ॥

---

श्रीकृष्ण उवाच

अर्जुनकृतप्रश्नचतुष्टयनिर्णयं स्पष्टीकुर्वन्नध्यायसमाप्तिपर्यंतं प्रश्नचतुष्टयं समा·
उत्तुल्य ति —तत्र प्रथमप्रश्नोत्तर ।
हे पार्थार्जुन, यदा यस्मिन्समये नित्याभ्यासयोगेन क्रमशो दृढीभूतचित्तो
यदा सर्वान् कामान् संसारस्य विविधभोगैश्वर्यादिसुखाभिलाषान् मनसोद्भूतान्
मनसि रममाणान् प्रविष्टान्संकल्पजान् प्रजहाति प्रकर्षेण परिपूर्णत्वेन त्यजति ततश्च
सर्वमनोगतकामपरित्यागानंतरं आत्मन्येव प्रत्यगात्मब्रह्मस्वरूपिणि महेश्वरे
प्रत्यात्मना स्वमनसा तुष्टो लौकिकाभिलषितमनःसंकल्पितवस्तुमात्रलाभनिरपेक्षोऽत
एव प्रसन्नो भवति। तदा स स्थिरप्रज्ञः स्थिरबुद्धिः समाधियोग्यबुद्धिरुच्यते ॥ ५७ ॥

and with what rites or means? Sitting steady in solitude,
in a particular posture? 'Walk' towards what goal?
What result does he obtain? These four questions are
asked by Arjuna on hearing that it is the steady mind
which qualifies for contemplation. Is the term स्थिरप्रज्ञ,
he of the steady intelligence, merely colloquial or does
it signify a particular line of conduct or practice?

*Shri Krishana said:*

57 When, O Arjuna, a man abandons all the desires
of the heart (for enjoyment through the senses of
perception, motor senses or the mind) and is contented
in (the undivided bliss of) Self by the self,—then is he
said to be of steady mind.

The answers to those questions take up the rest
of the chapter. The mind gradually becomes steady by
long, constant practice By the repudiation of the several
desires arising in the mind, one is 'contented' or indif-
ferent to the acquisition of the various means yearned
for in the way of the world; 'in the Self' *i.e.* in God
or प्रत्यगात्मा, 'by the self' *i.e.* by the mind.

दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ॥
वीतरागभयक्रोधः स्थीरधीर्मुनिरुच्यते ॥ ५८ ॥
यः सर्वत्रानभिस्नेहस्तत्तत्प्राप्य शुभाशुभम् ॥
नाभिनन्दति न द्वेष्टि स्थिरप्रज्ञस्तदोच्यते ॥ ५९ ॥
यदा संहरते चायं कूर्मोङ्गानीव सर्वशः ॥
इन्द्रियाणीन्द्रियार्थेभ्यः स्थिरप्रज्ञस्तदोच्यते ॥ ६० ॥

---

पुनश्च दुःखेषु विविधकष्टेषु प्राप्तेष्वनुद्विग्नमव्याकुलमदुःखितमक्लिष्टं मनश्चित्तं यस्य। तथा सुखेषु विविधभोगविलासादिसुखप्राप्तौ विगतस्पृहः तृष्णारहितोऽनभिलाषो सुखानां अर्थात् दुःखसुखादिभावेष्वविकृतमना.। वीतरागभयक्रोधः विगतो रागः सुखं भयं क्रोधो यस्य रागद्वेषविरहितवृत्तिरेतादृशो यो मुनिः स स्थिरधीः स्थिरप्रज्ञ उच्यते इयमेव स्थिरधेर्भाषा व्याख्या प्रतिपत्ति. ॥ ५८ ॥

यः सर्वत्र दुःखेषु सुखेषु वा अनभिस्नेह आसक्तिरहितो निर्लेपोस्ति। तथा च यस्तत्तत् जीवितदशायां विविधप्रसंगेषूपस्थितं शुभाशुभं प्राप्य, सुखप्रदभावमात्रं शुभं प्राप्य नाभिनदति नो हृष्यति, दुःखप्रदभावमात्रमशुभं प्राप्य च न द्वेष्टि तदा स स्थिरप्रज्ञः स्थिरधीरुच्यते ॥ ५९ ॥

भयग्रस्त कूर्मोंगानि इव यथा सर्वत. संहरते संकुचितानि करोति तथा अयं साधकोपि दुर्निग्रहमनोविकृतिभियाऽऽविष्ट प्रतिक्षणं मनोनिग्रहे सावधानः स्वेंद्रियाणि इन्द्रियार्थेभ्य इंद्रियग्राह्यविषयेभ्यः संहरते आत्मवशानि कुरुते स्वयं नेंद्रियवशगो भवति तदा स साधक स्थिरधी. स्थिरबुद्धि. स्थिरप्रज्ञावानुच्यते ॥ ६० ॥

58 He whose mind is free from affliction amid pains, who is indifferent to pleasures, free from attachment, fear and anger—is called the steady—minded sage.

59 He who remains unattached to all the things whether good or evil that he meets with, who feels neither pleasure nor aversion—is of a steady mind.

60 His mind is steady who withdraws all the senses from their objects even as the tortoise withdraws all his limbs from all sides (through fear)

The aspirant's fear would be of disturbance due to the mind being hard to restrain. Being always careful to restrain the mind, he therefore withdraws his senses

विषया विनिवर्तंते निराहारस्य देहिनः ॥
रसवर्जं रसाप्यस्य परं दृष्ट्वा निवर्तते ॥ ६१ ॥

अथ द्वितीयप्रश्नोत्तरं
इन्द्रियार्थेभ्य इन्द्रियाणि संहरन् स्थिरधीरुच्यते तर्हि निराहारकारण-
वशाद्वा विविधाऽऽहार्यविषयोपभोगपराङ्मुखा मनुष्या अपि कथं स्थिरधिय:
स्थिरप्रज्ञा न स्युरिति शंकायामाह—
निराहारस्य देहिनः कारणवशादप्राप्तेंद्रियग्राह्याऽऽहार्यविषयस्य रसवर्जं यथा
स्यात्तथैव रसाऽप्राप्तया रसोपयोगाशक्त्या वा विषया विनिवर्तन्ते। परं तत्तद्वि-
षयोपभोगस्य रसस्तृष्णाऽभिलाषः प्राप्त्याकांक्षा न निवर्तते स्वांतःकरणनिग्रहाभावात्।
यथा च बधिरस्य संगीतश्रवणवैराग्यं रसवर्जमस्ति श्रवणानंदजन्यो यो रसस्त-
त्प्राप्त्यभावादेव यावद्बाधिर्यं यदि बाधिर्यदोषनिवृत्तिश्चेन्न संगीतश्रवणवैराग्यं। रसा-
ज्ञानदोषसंकुलया रसज्ञया यदि स्वादुवस्तूपभोगेऽनीहा भिन्नभिन्नरसास्वाद
वैराग्यं तन्न रसनेंद्रियनिग्रहात्। तथैव दारिद्र्यादिविविधदुःखवशगानां धनादिव-
स्त्वलब्धिपर्यंतमेव तत्तद्वस्त्वाहार्यविमुखता तत्प्राप्त्या तु तत्तद्वस्तुषु इन्द्रिया-
णीन्द्रियार्थाधीनान्येव। त्वग्रोगपीडितस्य सुखस्पर्शकरवस्तुवैराग्यमजीर्णपीडितस्य
मोदकास्वादने प्रतिश्यायपीडितस्य सुगंधपदार्थेषु नेत्रव्याधिपीडितस्यांधस्य वा
रूपदर्शने वा वैराग्यं तत्सर्वं तत्तद्रसवर्जं यावत्तत्तद्विषयग्रहणोपरोधस्तत्तद्विषय-
विनिवृत्तिरतएवाहारस्य अप्राप्तोपभोगक्षमाहार्यद्रव्यस्य देहिनो विषयनिवृत्तिर्न
ब्रह्मप्राप्तिसाहाय्यिनी समाधियोग्या वा परमस्यापि स्थिरधेस्तु रस आसक्तिस्त-
त्तदिन्द्रियग्राह्यपदार्थेषु इंद्रियाणां आसक्तिर्विनिवर्तते कुत इति परं परममहेश्वरं
ब्रह्मरूपिणं दृष्ट्वा साक्षात्कृत्वा ॥ ६१ ॥

from their objects, making them obedient to himself and never himself obedient to them.

Next the second question is replied to. If it is the withdrawal of the senses from objects that qualifies, it might be objected that those who are deprived of the objects and he ce are involuntarily turned away from them would have to be termed steady-minded. This objection is removed in the next stanza:

61 If a man owing to his circumstances does not obtain any (objects of) enjoyment, the objects (can be said to) turn away only because they are absent or the power to enjoy them is absent रसवर्जं. But the *desire* for the several kinds of enjoyment does not 'turn-away'

यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः ॥
इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥ ६२ ॥

---

यत्तस्याऽपि यत यस्मात्कारणात् तस्य अपि तादृशस्यापि परमात्मनो महे श्वरसाक्षात्कारपरायणस्यापि विपश्चित. सर्वशास्त्रपारंगतस्य स्थिरधेः स्थिरप्रज्ञ स्यापि पुरुषस्य मन. प्रमाथीनि विषयलंपटानि क्षोभकराणि अतिबलवत्तरस्व भावाद्विवेकध्वंसकराणीन्द्रियाणि प्रसभं बलाद्धठात् हरन्ति तत्तद्विषयाधीनं कुर्वन्ति अर्थात् तादृशस्य तपस्विनोपि मन. हर्षशोकादिदोषग्रस्तैरिन्द्रियैः प्रसभं ह्रियते ॥ ६२ ॥

because he has not mastered his mind. It is like the deaf man's indifference to music just because he *cannot* enjoy it so long as he remains deaf. if the deafness were cured he would not be so indifferent! If one does not wish for tasteful dishes because the tongue is diseased, it is not on account of mastery of the sense of taste. So too if one is afflicted by poverty or other disabilities, one remains indifferent to objects of enjoyment only so long as one cannot get at them, once they are obtained, the senses will show that they are still subject to the attractions. One suffering from scurvy is indifferent to objects pleasant to touch, a dyspeptic does not desire sweetmeats, suffering from catarrh one is averse to odoriferous articles, if one is blind or ophthalmic one is not anxious to see beautiful things. But this kind of non-attachment is due to incapacity of the senses or absence of their objects· it does not qualify one for contemplation or for attaining the Brahman. Whereas the 'taste' of a (steady-minded) man अस्य रसः अपि 'turns back' (his senses' attachment to their objects ceases) when he realises the Supreme परं दृष्ट्वा निवर्तते.

62 O Arjuna, even in the case of the wise (fitted to know or striving to attain the supreme reality), the excited senses forcibly carry away the mind (therefore the Yogin must chiefly subdue the mind).

> तानि संयम्य मनसा युक्त आसीत मत्परः ॥
> वशे हि यस्येन्द्रियाणि स्थिरप्रज्ञः स उच्यते ॥ ६३ ॥
> ध्यायतो विषयान्पुंसः सङ्गस्तेषूपजायते ॥
> संगात्संजायते कामः कामात्क्रोधोऽभिजायते ॥ ६४ ॥

---

अथ तृतीयप्रश्नोत्तरं

मनोदौर्बल्यमेव पतनकारणं मनसो दौर्बल्यादेवेन्द्रियाणां विकृतिर्भवति अतः प्रथमं तु तानि इन्द्रियाणि मनसा संयम्य सम्यङ्निगृह्य वशीकृत्य विषयेभ्य उपसंहृत्य पश्चात् युक्तः योगबुद्धियुतो मनुष्यः मत्परो ब्रह्मपरायणो भूत्वा आसीत समाधिस्थः स्यात् ब्रह्मरूपिणं महेश्वरमभ्यस्येत् । अर्थात् येनैव प्रबलेन मनसा इन्द्रियाण्युपसंहृतानि इन्द्रियार्थेभ्यो निगृहीतानि स एव स्थिरधीः स्थितप्रज्ञः न त्वाऽप्रवृत्त्या । यस्य साधकस्येन्द्रियाणि मनसा साधनेन वशीभवन्ति स एव स्थिरप्रज्ञः स्थिरधीरुच्यते ॥ ६३ ॥

पुनरपि परब्रह्मध्यानपरायणदशायामपि अवशीभूतमनसः पुरुषस्य मनसो दुर्निग्रहत्वं विशदीकरोति । विषयान् विविधसुखवैभवविलासरूपान् मनसा ध्यायतः पुंसः पुरुषस्य तेषु इन्द्रियग्राह्यभावेषु संग आसक्तिः प्रीतिरुपजायते संगादासक्त्या च कामस्तत्प्राप्त्युपायचिन्तनं तृष्णातिरेकः संजायते उत्पद्यते अभिलषितवस्तुप्राप्त्यवरोधस्तदा कामात् क्रोधः अभिजायते उत्पद्यते क्रोधात्

63 He must subdue the senses through the mind, and after that he must concentrate his mind in Me (who am the Brahman) The man who has controlled the senses is called the steady-minded Yogin.

(Now the third question is taken up. It is mental weakness that leads to downfall. The senses go astray if the mind is not strong. So they have first to be restrained from their objects with a strong mind as the instrument, then they obey and one's intellect becomes steady—but not by mere inaction.)

It is further exemplified how difficult it is to control the mind unless it is mastered, even though one be ardent to contemplate the Supreme:

64–65 When a man dwells mentally on the objects (of sense), he becomes attached to them; from attachment is produced desire and from desire anger results;

क्रोधाद्भवति संमोहः सम्मोहात्स्मृतिविभ्रमः ॥
स्मृतिभ्रंशाद् बुद्धिनाशो बुद्धिनाशात्प्रणश्यति ॥ ६५ ॥
रागद्वेषविमुक्तस्तु विषयानिन्द्रियैश्चरन् ॥
आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥ ६६ ॥

---

योग्यायोग्यविवेकशून्यः संमोहः भवति । संमोहात् स्मृतिविभ्रमः स्वयमारब्धब्रह्मप्राप्तिरूपकार्यात् स्वकर्तव्यकर्मणो विस्मृतिः स्मृतिनाशो भवति । स्मृतिभ्रंशात् बुद्धिनाशो योगयुक्तबुद्धिभ्रंशो भवति । योगयुक्तबुद्धिनाशात्स्वयं प्रणश्यति ब्रह्मरूपमहेश्वरैक्यप्राप्तिमार्गाद्भ्रश्यति अत एवेन्द्रियाणि प्रथमं मनसा संयम्य नियम्य वशीकृत्य ततो बुद्धियोगयुतो भूत्वा चिदानंदरूपिणं महेश्वरमभ्यस्येत् ॥ ६४-६५ ॥

पुरुषो रागद्वेषविमुक्तो द्वंद्वातीतो भूत्वा तु यदि आत्मवश्यैः मनसा वशीकृतैर्निगृहीतैर्मनःस्वाधीनैरिन्द्रियैर्विषयानिन्द्रियग्राह्यविषयान् चरन् अनुभवन् विधेयात्मा सफलमनोरथो भूत्वा प्रसादमधिगच्छति प्राप्नोति । आत्मन्येव चात्मना तुष्टो भवति ब्रह्मरूपिमहेश्वरैक्यप्राप्त्या मनःप्रसन्नतामनुभवति ॥ ६६ ॥

from anger delusion is produced and delusion leads to deflection of memory, by deflection of memory the intelligence evanesces and the evanescence of the intelligence leads to ruin.

'Anger' results when the object desired is not obtained. 'Delusion' is absence of discrimination as to what is proper and what improper. 'Memory' of the goal of realisation of the Brahman one has set before oneself, and the means therefor; the 'intelligence' wedded to yoga. 'Ruin' is resilience from the path of realisation. So one should first control the senses by the mind, then fixing the intelligence in yoga one should practise contemplation of the Supreme Lord who is Knowledge and Bliss.

66 He who, free from attachment and aversion, pursues sense-objects with his senses which are under his control, has reached his goal and attains a settled peace of mind (by union with God or Brahman).

प्रसादे सर्वदुःखानां हानिरस्योपजायते ॥
प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते ॥ ६७ ॥
नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना ॥
न चाभावयतः शान्तिरशान्तस्य कुतः सुखम् ॥ ६८ ॥
इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते ॥
तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि ॥ ६९ ॥

---

प्रसादे इन्द्रियनिग्रहकरमनसः प्रसन्नतायां प्राप्तायामस्य पुरुषस्य सर्वदु- खानामाध्यात्मिकाधिभूतादिसर्वक्लेशानां हानिर्नाश उपजायते प्रसन्नचेतसः पुरुषस्य बुद्धिर्हि अवश्यं आशु सत्वरं पर्यवतिष्ठते परितः सर्वविषयेभ्यो मन आकृष्य अवतिष्ठते निश्चला भवति ॥ ६७ ॥

अयुक्तस्य अवशीकृतचित्तस्य पुरुषस्य बुद्धिर्योगयुक्ता बुद्धिर्न भवति तथा च अयुक्तस्य अकृतमनोनिग्रहस्य पुरुषस्य भावना महेश्वरे एकाग्रतापि न भवति । अभावयतः भावनाहीनस्य शान्तिर्न भवति अशांतस्य शांतिविहीनस्य परमानंदैकमयं सुखं कुतः प्राप्येत ? न कुतोपि ॥ ६८ ॥

चरतां स्वस्वेन्द्रियग्राह्यविषयेषु प्रवर्तमानानामिन्द्रियाणां मध्ये यत् यदा मनः अनुविधीयते चित्तमपि यदा इंद्रियाधीनं भवति प्रमाथिभिरिन्द्रियैर्मनो यदा ह्रियते तदा तन्मनः अस्य पुरुषस्य प्रज्ञां ब्रह्मैक्यप्राप्तिप्रवृत्तां बुद्धिं हरति विषयलंपटां करोति यथाऽम्भसि जले नावं प्रतिकूलो वायुर्नाशयति अनुकूलः स्वस्थानं प्रापयति तद्वत् ॥ ६९ ॥

67 In that peace all the pains (physical, mental and spiritual) die away. When the heart is peaceful, the intellect at once becomes steady (withdrawing the mind from all the surrounding objects)

68 The man of uncontrolled mind cannot have an intellect wedded to Yoga, nor can he attain concentration in God; and for him who is without concentration, there is no peace; and how can there be happiness (of undiluted bliss) for one without peace?

69 When (the aspirant's) mind follows the senses in the pursuit of their objects, it disturbs (blots out) the contemplation of self (making the intellect attached to the objects of enjoyment) even as a (contrary) wind carries away a ship in the waters.

तस्माद्यस्य महाबाहो निगृहीतानि सर्वशः ॥
इन्द्रियाणीन्द्रियार्थेभ्यः स्थिरप्रज्ञा च सा स्मृता ॥ ७० ॥
या निशा सर्वभूतानां तस्यां जागर्ति संयमी ॥
यस्यां जाग्रति भूतानि सा रात्रिः पश्यतो मुनेः ॥ ७१ ॥

---

हे महाबाहो अर्जुन, तस्मात् कारणात् एतन्निश्चीयते यत् यस्य पुरुषस्येंद्रियाणि इंद्रियार्थेभ्य इन्द्रियग्राह्यविषयेभ्यः सर्वशः सर्वप्रकारेण निगृहीतानि तस्य पुरुषस्य सा स्थिरप्रज्ञा स्मृता स्थिरबुद्धिर्जातेति ज्ञायते अर्थात् मनः संयम्य विषयांल्लोकव्यवहारान्सेवमानो यस्मिन्कस्मिंश्चिदप्याश्रमे स्थितः कामक्रोधादिभिरनभिभूयमान· स्थिरप्रज्ञो योगीत्युच्यतेऽस्मिन्निदमेव वैशिष्ट्यं लोकोत्तरता च सामान्यमनुष्येभ्यः ॥ ७० ॥

योगी–योगाभ्यासप्रवृत्तः सर्वव्यवहारपरायणोपि सर्वव्यवहारनिर्विण्णः कथं भवति । रात्रंदिनं संसारे नानाविधशारीरिकव्यापाराहारनिद्राविषयादिव्यवहारप्रवृत्तस्य संसारनिर्वेदप्रदा समनोनिग्रहा परब्रह्मप्राप्तिसाधना योगाभ्यासप्रवृत्तिः कथं संभवतीत्याशंकायामाह । या निशेति—सर्वभूतानां सर्वप्राणिनां या निशा स्वापविषयादिसुखोपभोग्या सर्वेन्द्रियधर्मप्रशमनी तमःप्रधाना या रात्रिस्तस्यां योगाभ्यासरतो वर्णाश्रमधर्मस्थोऽपि योगाभ्यासरतः परब्रह्मश्वर्यप्राप्तिकामो संयमी मन.संयमशीलो मनःसंयमाभ्यासी योगी जागर्त्येव सामान्यमनुष्यवन्न स्वपिति अर्थात् प्राणिनां निद्रादिधर्मपोषणी रात्रिरेव योगाभ्यासरतानामेकान्तप्रदः सर्वोपाधिविरहितः समयः प्राणिनां रात्रावेव स्थिरप्रज्ञाप्राप्तये समनोनिग्रहं योगाभ्यासार्थं संयमी जागर्ति । यस्यां दशायां भूतानि सर्वप्राणिनो जाग्रति नानाविधां नानाव्यवहारात्मिकां चेष्टां कुर्वन्ति सा पश्यतः

70 Therefore, oh mighty one, his mind is recognised as steady whose senses are completely restrained from the objects of senses

This is his distinction from and superiority to ordinary men that however situated, he engages in the concomitant activities but is not overcome by passions because his mind is under control.

71 What is night to all created beings, is the time of waking to the man of restraint. When other beings are awake, then is it night for the seeing Sage.

When all others go to sleep, the aspirant finds it the best time for practising Yoga in the form of rest-

आपूर्यमाणमचलप्रतिष्ठं
समुद्रमापः प्रविशन्ति यद्वत् ॥
तद्वत्कामा यं प्रविशन्ति सर्वे
स शान्तिमाप्नोति न कामकामी ॥ ७२ ॥

---

सम्यग् ज्ञानवतो मिथ्याज्ञानाऽलुब्धस्य संसारव्यतिरिक्तमहेश्वरस्वरूपनिबद्ध-
भावस्य मुने. सा रात्रिः। अर्थात् दिवा प्राणिनां व्यवहारेष्वनासक्त एव रात्रिव-
द्दिवसं नयति दिवा प्राणिनां संघर्षेण शारीरव्यापारप्रवृत्त्या एकांताभावेन मनः-
संयमं संपादयितुमक्षमो दिवैव रात्रिकृत्यं स्वापादिकं वा संपादयति अतो दिव-
सस्तस्य रात्रिरूप एव ॥ ७१ ॥

आपूर्यमाणं विविधमार्गादागतैर्नद्यादीनां जलैः प्रतिदिनं परिपूर्यमाणमपि
अचलप्रतिष्ठं अनुद्रिक्तं अचलतया न्यूनाधिक्याऽऽभोगविरहितं एतादृशं समुद्रं
यद्वत् आपः जलानि प्रविशन्ति उदधिशरीरे लीयन्ते यद्वत् यथा न सहस्रशो नदी-
नां जलप्रवेशादपि वृद्धिं गच्छति न कांचिदपि विकृतिमनुभवति तद्वत् तथैव
सर्वे कामा संसारव्यापारा· संसारप्रलोभनानि यं प्रविशन्ति प्रविश्यापि यं
मनोनिग्रहपूर्वकं ब्रह्मैक्यध्येयं न विकर्तुं शक्नुवन्ति स शान्तिमाप्नोति समनो-
निग्रहं योगाभ्यासपूर्वकं ब्रह्मप्राप्तौ साफल्यमनुभवति परं न कामकामी कामान्
विविधसंसारसुखप्रदान् विषयान् कामयमान उपभोक्तुमिच्छन्न शान्तिमाप्नोति।
यथोक्तं सांख्यसूत्रे "न भोगाद्रागशान्तिर्मुनिवत्" (अ-४-२७) ॥ ७२ ॥

raining the mind and endeavouring to unite himself with
the Supreme, for he wants solitude and absence of all
disturbance for such practice. (Thus his worldly activities
do not clash with his spiritual seeking.) And in the
day-time he is unattached to the activities of others and
spends the time as if it were night: he may even have
the necessary amount of sleep now, spiritual practice
being out of the question for want of solitude.

72 He attains peace, into whom all the desires
flow as do rivers into the sea which is being filled with
water on all sides, yet remains undisturbed. But he who
hankers after desires (*i. e.* objects of senses) does not
attain peace.

'Attains peace,' *i. e.* his endeavour to unite him-
self with the Brahman, by controlling the mind, becomes

विहाय कामान् यः सर्वान्पुमांश्चरति निःस्पृहः ॥
निर्ममो निरहंकारः स शान्तिमधिगच्छति ॥ ७३
एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति ॥
स्थित्वास्यामन्तकालेऽपि ब्रह्मनिर्वाणमृच्छति ॥ ७४
इति श्रीभगवद्गीतायां सांख्य-कर्मयोगो नाम द्वितीयोऽध्याय ॥

---

अथ चतुर्थप्रश्नोत्तरं

अतो यो मुनिः सर्वान् कामान् संसारे प्रवृत्तान् विहाय निःस्पृहस्तृष्णावेरहितः कामभोगस्पृहाविरहितो निर्ममो संसारपदार्थमात्रेषु ममत्वरहितो नेरहंकारः अहं कर्ता अहं भोक्तेत्यभिमानविरहितोऽहंकारवर्जितोस्ति स शान्तिमधिगच्छति शान्तिरूपं मोक्षं ब्रह्मैक्यभावं प्राप्नोति ॥ ७३ ॥

हे पार्थ हे अर्जुन, एषा कर्मफलत्यागपूर्विका संसारे नानावर्णाश्रम धर्मपरायणस्यापि योगयुक्तबुद्धेरुपयुक्ता सांख्येन ब्रह्मैक्यमार्गदर्शिनी ब्रह्मसाक्षात्कारिणो ब्राह्मी स्थिरप्रज्ञालक्षणा स्थितिर्गतिर्मार्गः प्रदर्शितः । एनां स्थितिं प्राप्य तत्पर्यंतं ब्रह्मप्राप्तिमार्गमतिक्रम्य फलाशाविरहितमनाः कर्मप्रवृत्तः न विमुह्यति कैश्चिदपि विघ्नैः पराभवति, न ज्ञानबाधितस्याज्ञानजन्यपराभवो भवति ।
अस्यां ब्राह्मीस्थितौ ब्रह्मतादात्म्यकृन्मार्गे वर्तमानो योगाभ्यासेन ब्रह्मप्राप्तये यतमानो यदि मृत्युवशं गच्छति ; ब्रह्माधिगमात्प्रागेव यदि पञ्चत्वमुपैति तदपि तादृशेंतकाले जाते सत्यपि स ब्राह्मीस्थितिपरायणमना ब्रह्मनिर्वाणं ब्रह्मप्राप्तिरूपं मोक्षं ऋच्छति प्राप्नोति ॥ ७४ ॥

इति श्री भगवद्गीतायां कालिदासात्मज राजवैद्य जीवरामशास्त्रिणा
काठीआवाडांतर्गत गोंडल निवासिना विरचितायां चंद्रघंटाख्यटीकायां
सांख्य-कर्मयोगो नाम
द्वितीयोऽध्यायः ॥ २ ॥

ruitful; the desires may present themselves to the mind ut are not entertained there For the inaccessibility of peace to one who is subject all desires, *vide* Samkhya Sootra IV 27: न भोगाद्रागशान्तिर्मुनिवत्

Next the *fourth* question is answered:

73 He who, abandoning all desires, *goes on, free* from desire, attachment and egoism, *attains peace.*

74 O Arjuna, this is the state of (union with) Brahman. After attaining this, one is not perplexed.

One merges into Brahman even if one should resort to it at the time of death.

The above 'state' should be preceded by the renunciation of fruits of actions It is indicated by 'the steady intellect' and can be taken up by all men in different stages and conditions of life, and it will lead them to the realisation of union with Brahman Then, though one is engaged in action, one is 'not perplexed' or overcome by any obstacles. Knowledge is never defeated by ignorance Striving along this path, even if one be overtaken by death before realisation, absolution is obtained as the mind is merged in that state even at the last moment.

Thus ends the Second Chapter entitled 'Samkhya and Karma Yoga" in the English Rendering of the Commentary "Chandra-Ghanta" by Rajavaidya Jivarama Shastri, son of Kalidasa, Gondal (Kathiawar) on the Gita.

# ॥ श्री भगवद् गीता ॥

चंद्रघंटाटीकयोपेता

## तृतीयोऽध्यायः ॥ ३ ॥

अर्जुन उवाच

ज्यायसी चेत्कर्मणस्ते मता बुद्धिर्जनार्दन ॥
तत् किं कर्मणि घोरे मां नियोजयसि केशव ॥ १ ॥
व्यामिश्रेणैव वाक्येन बुद्धिं मोहयसीव मे ॥
तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम् ॥ २ ॥

---

अर्जुन उवाच

हे जनार्दन कृष्ण, कर्मणः कर्मापेक्षया बुद्धिः योगयुक्तबुद्धिर्ज्यायसी श्रेष्ठा इति ते तव मता निश्चिता चेत् तत् तर्हि हे केशव कृष्ण घोरे स्वजनानामसंख्यातानां राज्ञां मानवानां च वधपरिणामिनि युद्धे मां कस्मान्नियोजयसि प्रेरयसि ? ॥ १ ॥

व्यामिश्रेण एव वाक्येन कर्मणो ज्ञानस्य द्वयोः प्रतिपादकेन समन्वयवता *अत एव संदेहोत्पादकेन त्वया वर्णितेन वाक्येन उपदेशेन यथाहि—"त्रैगुण्यविषया* वेदा निस्त्रैगुण्यो भवार्जुन" इत्युक्त्या वेदप्रतिपादितानां कर्मणां गौणत्वमेकतः प्रतिपादयसि एकतश्च कर्मण्यस्त्वधिकारस्ते इत्यादिवाक्यैः कर्मणि प्रेरयसि । एकतो "निर्द्वन्द्वो नित्यसत्वस्थो निर्योगक्षेम आत्मवान्" इदृशैर्वाक्यैर्निवृत्तिमार्गमुपदिशसि एकतश्च "धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते" इत्यादिना योद्धुमुद्दीपयसि अर्थात् व्यामिश्रेण ज्ञानकर्मणोर्द्वयोः प्रतिपादयता

## CHAPTER III.

*Arjuna said:*

1 O Krishna, if you think that (Yoga of) the intelligence is superior to action, why do you incite me to this horrible action?

2 You are confounding my understanding by your equivocal words (eclectic or synthetic statements on both action and knowledge, so inducing doubt. *Once you say,* "The Vedas deal with the three principles, therefore rise above them" and thus you enunciate the comparative

श्री भगवानुवाच

लोकेऽस्मिन्द्विविधा निष्ठा पुरा प्रोक्ता मयानघ ॥
ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम् ॥ ३ ॥

---

वाक्येन एव अवश्यं निश्चितं मे बुद्धिं मोहयसि इव संदिग्धां करोषि इव । अतस्तदेकं तयोर्ज्ञानकर्मणोर्मध्ये यत्सत्यं श्रेयस्करं शास्त्राभिमतं स्यात्तन्निश्चित्य वद । अद्यावधि त्वया यदुक्तं तन्न मे मनसः समाधानकरं उत मनसो द्वैधीकरमेव द्वयोर्मध्ये किं मे श्रेयस्करमिति त्वदुपदेशेन नाहं किमपि निश्चेतुं शक्नोमि । अतो मे द्वयोर्भद्रावहं तद्वद येनाऽऽचरितेनाहं श्रेयः कल्याणमाप्नुयां प्राप्नुयां । अर्थात् भवदुक्तनिश्चितशास्त्रसिद्धांतेनाहं जानीयां यदस्मिन् संप्राप्ते रणे युद्धं श्रेयस्करमुत युद्धपरावर्त्तनं स्वजनवधत्यागो ज्ञानमार्ग एव श्रेयस्कर इति निश्चेतुं शक्नुयां ॥ २ ॥

श्रीकृष्ण उवाच

हे अनघ निष्पाप अर्जुन, अस्मिन् लोके जगति द्विविधा निष्ठा द्विप्रकारा गतिर्मया पुरा प्रथमं इतः पूर्वं कृतविवेचने प्रोक्ता सांख्यानां अध्यवसायात्मिकबुद्धि- मतां सम्यक् ख्यायते ब्रह्मज्ञानं ययेति संख्या बुद्धिर्येषां ते सांख्यास्तेषां स्थिरप्रज्ञानां कपिलमुनिप्रोक्तसंसारमुक्तिकारणरूपज्ञानयुक्तानां ज्ञानयोगेन, ज्ञानमेव

unimportance of Vedic rites and actions. Then again you say, "Your duty is to perform action only" and thus you inculcate the performance of actions. Again you say, "Rise above the opposite pairs of feelings and resort to the *satvic* principle, be unconcerned with getting and losing, be self-possessed" and thus you enjoin renunciation of action. On the other hand you have said, "There is nothing more welcome to a Kshatriya than a righteous war." How can I act according to these conflicting precepts? Therefore, tell me with certainty the one definite way whereby I may reach bliss

Your teaching till now has not calmed my mind. I cannot decide for myself, so tell me which course is better: war or renunciation?

*Shri Krishna said:*

3 Oh Arjuna, the method taught before (in the previous Chapter) is two-fold in this world: for the

न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते ।
न च संन्यसनादेव सिद्धिं समधिगच्छति ॥ ४ ॥

योगस्तेन प्रकृतिपुरुषविषयकं ब्रह्मप्राप्तिविषयकं शास्त्रश्रवणमनननिदिध्यासात्मकं यज्ज्ञानं स एव योगस्तेन ब्रह्मनिष्ठा भवति । तथा च योगिनां निष्कामकर्मपरायणानां कृतकर्मफलानभिलाषिणां संध्योपासनादारभ्य निर्विकल्पसमाधिस्थितिपर्यंतं कर्मयोगेन कृतकर्मभि. श्रुतिस्मृत्युपदिष्टैर्ब्रह्मनिष्ठा भवति । अर्थात् सांख्याः सांख्ययोगविदः सांख्यनिपुणा ज्ञानयोगेन, योगिनः कर्मयोगिनश्च कर्मयोगेन श्रुतिस्मृतिपुराणेतिहासप्रतिपादितकर्मभिर्ब्रह्मनिष्ठां ब्रह्मैक्यं ब्रह्मणि लयं गच्छन्ति अर्थात् द्वावेव ब्रह्मप्राप्तिपन्थानौ न परस्परविरुद्धौ । सांख्यानां ज्ञानयोगेपि न कर्मसंन्यासः योगिनां कर्मयोगेपि न च ज्ञानसंन्यासः संभवति ॥ ३ ॥

पुरुषः कर्मणां अनारंभात् वर्णाश्रमधर्मोचितश्रुतिस्मृतिपुराणेतिहासप्रतिपादितकर्मणां अकरणान्नैष्कर्म्यं कर्मराहित्यं सर्वकर्मत्यागशक्तिं न अश्नुते न प्राप्नोति । संन्यसनादेव संन्यासग्रहणादेव सिद्धिं ब्रह्मैक्यरूपां मुक्तिं न

Samkhyas, through the Yoga of knowledge; and for the Yogins through the Yoga of action.

The Samkhyas keep the intelligence unsubmerged *by worldly activities. Their name is derived from* संख्या 'intelligence by which the Brahman is known ख्यायते well सम्यक् ' They discriminate between nature and soul, which leads to the attainment of Brahman by the triple means of hearing ( from scripture ), cogitation and contemplation. The sage Kapila founded this system. 'Yogins' *are those who engage in all prescribed activities from* the twilight prayers to transcendental contemplation without any desire for the fruits of these actions. Either path leads to realisation, so that the two are not contrary to each other: *the Samkhyas resort to knowledge* but do not forsake action, the Yogins resort to action but do not eschew knowledge.

4 *One cannot reach freedom from action* without performing actions ( such as prescribed sacrifice etc. ). One cannot attain final emancipation by mere renunciation.

न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत् ॥
कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥ ५ ॥

समधिगच्छति प्राप्नोति अर्थात् सांख्यैः सांख्याभिधज्ञाननिष्ठैर्योगिभिश्च सर्वैरेव नैष्कर्म्यप्राप्तये ब्रह्मज्ञानादिध्याय तु कर्माण्यनुष्ठेयान्येव कर्मणामारंभादेव सोपान-क्रमशो नैष्कर्म्यं कर्मसमाप्तिं कर्मराहित्यं प्राप्नुवन्ति अर्थान्मम वाक्यं न व्यामिश्रं न कर्मण कर्मापेक्षया योगयुक्तबुद्धिर्ज्यायसी न च योगयुक्तबुद्धेर्योगयुक्तबुद्धय-पेक्षया कर्मप्रवृत्तिर्वा ज्यायसीति मयोपदिष्टं ॥ ४ ॥

स्वां चतुर्थश्लोकोक्तिं दृढयन्नाह न हीति—कश्चिदपि मानवः यस्मिन्कस्मिन्नपि वर्णाश्रमधर्मे स्थितः क्षणमपि क्षणमात्रमपि जातु कदाचिदपि कस्मिंश्चित्स-मयेऽपि अकर्मकृत् किमपि कर्म अकुर्वन् मनसा वाचा कर्मणा ज्ञानेंद्रियैः कर्मेन्द्रियैर्वा जाग्रत्स्वप्नयोर्वा किमपि कर्म अकुर्वाणो न तिष्ठति । सर्वो जनः प्रकृतिजैर्गुणैरवशः सन् कर्म कार्यते सर्वदा सर्वकालं ज्ञानयोगजुषः सांख्याः कर्म-योगजुषो योगिनोपि किमपि कर्म कुर्वन्त्येव नाऽकर्माणस्तिष्ठंति तत्र प्रकृतिजा गुणाः सत्वरजस्तमांस्येव कारणं स्वयमनिच्छंतोपि प्रकृतिमायाजन्यगुणैः प्राक्तन-कर्मानुबन्धेन स्वभावसिद्धैर्मध्यमहीनातिरिक्तप्रमाणेन प्रतिमनुष्यशरीरस्थितैः परायत्ता अवशा अस्वतंत्रा जगत्कारणरूपप्रकृतिमायासमुद्भवैर्गुणैरवशाः पराधीनाः संतः सर्वेऽपि प्राणिनः कर्म कुर्वन्ति न च कर्मरहितं ज्ञानं, न च ज्ञानरहितं किमपि कर्म संभवतीति ज्ञानकर्मणी मियोऽनुबंधयुक्ते एकमेव वस्तु ॥ ५ ॥

Both Samkhyas and Yogins have to perform actions which will lead them step by step to freedom or emancipation. Thus my teaching is not 'equivocal': I have not meant that the intelligence fixed in Yoga is superior to action or that engagement in action is superior to such an intelligence.

This statement is borne out by the next:

5 None (in whatever stage) can remain inactive (either by thought, word, or act, waking or dreamingq even for a moment, because all creatures are dependent on Prakriti of the three principles goodness, passion and darkness rooted in the constitution and coercing by effect of previous actions); therefore all are helplessly driven to action by them (whether willing or not).

कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् ॥
इन्द्रियार्थान् विमूढात्मा मिथ्याचारः स उच्यते ॥ ६ ॥
यस्त्विन्द्रियाणि मनसा नियम्याऽऽरभतेऽर्जुन ॥
कर्मेन्द्रियैः कर्मयोगमशक्तः स विशिष्यते ॥ ७ ॥

---

विमूढात्मा विशेषेण मूढ मूर्खताभिभूतं आत्मा मनो यस्य स यः कर्मेन्द्रियाणि वाक्पाणिपादपायूपस्थानि कर्णत्वचानेत्रजिह्वानासिकादीनि संयम्य हठान्निगृह्य इन्द्रियार्थान् ज्ञानेंद्रियग्राह्यविषयान्भोक्तुं मनसा स्मरन् चिंतयन् भिन्नभिन्नेंद्रियग्राह्यविषया उपलब्धाश्चेत्तान्भोक्तुमिच्छति यावदनुपलब्धिस्तावत्कालमेव तद्विमुखत्वं, कर्मेन्द्रियसंयमात् कर्माणि कर्मेन्द्रियैश्चेन्न करोति तथाप्ययशेन मनसा तु करोत्येव । एतादृशो विमूढात्मा विशेषेण मूढः आत्मा अदृढं विकलं पराधीनं मुग्धं आसक्तं बालवदस्थिरस्वभावं मनो यस्यासौ एतादृशः स मनुष्यो मिथ्याचारः मिथ्या लोकवंचक स्वमहत्त्वास्थापनार्थं कृताडंबररूप आचार आचरणं यस्यासौ विद्वद्भिर्ज्ञानिभिः कथ्यते अर्थात् कर्मेन्द्रियाणि निगृहीतान्यपि यावन्न मन संयमस्तावत्पर्यंतं केवलं दंभो धूर्तता निष्फलप्रयत्नवत्त्वं वा कथ्यते ॥ ६ ॥

हे अर्जुन, अत एवाहं कथयामि यत् यस्तु य एव पुरुष इन्द्रियाणि ज्ञानेंद्रियाणि श्रोत्रादीन्द्रियाणि मनसा नियम्य निगृह्य वशीकृत्य असक्तस्तत्कर्मसु संगवर्जितो ममत्ववर्जितः कृतकर्मफलकामविरहितः सन् कर्मेन्द्रियैर्वाक्पाणिपादपायूपस्थैः कर्मयोगमारभते कर्माण्याचरति स विशिष्यते उत्तमः श्रेष्ठ इत्युच्यते स एव सिद्धिमाप्नोति । उक्तं च भगवता पतंजलिना "योगश्चित्तवृत्ति-

6 He who controls the organs of action (like *speech, hands feet and private organs*) and yet contemplates (desires in his mind) the objects to be enjoyed *by those organs, is bewildered in mind and a hypocrite.*

In outer life he restrains the senses to show himself forth as a wise Yogin or perfect man, or simply because he is unable to indulge them, but in his mind he yearns for the object of each sense So in effect he has mentally committed all that Restraint of senses avails nothing so long as the mind is unrestrained.

7 But he who (free from egoism) controls the senses (of perception) by the mind, and performs the Yoga of action with the organs of action without feeling

।।।न्वरोपेत।

नियतं कुरु कर्म त्वं कर्मज्यायो ह्यकर्मणः ॥
शरीरयात्राऽपि च ते न प्रसिद्ध्येदकर्मणः ॥ ८ ॥
यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः ॥
तदर्थं कर्म कौन्तेय मुक्तसंगः समाचर ॥ ९ ॥
सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ॥

---

निरोधः"। न स कृतकर्मभिः कृतकर्मफलैर्वा लिप्यते अतश्चानासक्त्या क्रिय-
माणेषु कर्मसु मनसोऽव्यापारे न ज्ञानहानिः ॥ ७ ॥

अतस्त्वं नियतं यदा यदा यद्यदुपस्थितं प्रसंगानुसारेण यत्प्राप्तं नित्यं
नैमित्तिकं यद्यद्वर्णाश्रमधर्मोचितं कर्म तत् कुरु। यतो हि अवश्यं अकर्मणः कर्माऽकर-
णापेक्षया कृतं कर्मैव ज्यायः श्रेष्ठं वरं। अकर्मण. कर्माचरणविरहितस्य ते तव
शरीरयात्रापि स्नानभोजनशयनविलासवैभवोपभोगादिकार्यप्रवर्तिर्देहनिर्वाहः संसारे
प्रवृत्तिरपि न प्रसिद्ध्येत् न सफलीभवेत् न चरितार्था स्यात् ॥ ८ ॥

यज्ञार्थात् कर्मणोऽन्यत्र यज्ञनिमित्तं यानि कर्माणि क्रियंते तेनैव लोकः
न कर्मबन्धनः यज्ञार्थं यज्ञबुद्ध्या फलाभिलाषविरहेण यानि कर्माणि क्रियंते
तैरैव मनुष्या न बद्ध्यंते तानि कर्माणि तस्य बन्धहेतूनि न भवन्ति परं यानि
कर्माणि फलाभिलाषपूर्वकं क्रियंते यज्ञकृते यज्ञमुद्दिश्य देवपितृकृते न
क्रियंते तान्येव तस्य बन्धनरूपाणि खलु। अत संगं फलाकांक्षां त्यक्त्वा
परोपकारबुद्ध्या ब्रह्मार्पणवृत्त्या अहं कर्तेत्यभिमानविरहेण क्रियमाणेषु पुरुषो
न बद्ध्यते। हे अर्जुन तदर्थं तस्मात्कारणात् मुक्तसंगः फलसंकल्पवर्जितः सन्
कर्म यदा यदा यदुपस्थितानि तानि कर्माणि समाचर कुरु ॥ ९ ॥

attachment, is the most worthy.

Patanjali has made it clear that Yoga is restraint
of *mental* movement, योगश्चित्तवृत्तिनिरोधः। One does not
deviate from wisdom by disinterested action in which
the mind is not entangled (and attains absolution.)

8 Therefore perform the action enjoined (by atten-
dant circumstances). For action is superior to inaction.
You cannot even maintain your body without action.

9 Only those actions do not bind a man which
are performed as a sacrifice *i.e.* for the good of others,
dedicate them to the Supreme, without attachment to
results All other actions bind man. Therefore, O Arjuna,
perform actions (which fall due from time to time)
without attchment (desire of reward).

अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥ १० ॥
देवान्भावयताऽनेन ते देवा भावयन्तु वः ॥
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥ ११ ॥

इष्टान्कामान् हि वो देवा दास्यन्ते यज्ञभाविताः ॥
तैर्दत्ता न प्रदायैभ्यो यो भुंक्ते स्तेन एव सः ॥ १२ ॥

---

पुरा कल्पादौ प्रजापतिर्ब्रह्मा सहयज्ञाः यज्ञसहिताः प्रजा. ब्राह्मणादीन् सृष्ट्वोवाच । अनेन यज्ञेन यज्ञसाहाय्येन आसक्तिविरहितं कृतेन यज्ञाख्येन कर्मणा यूयं प्रसविष्यध्वं विविधाः प्रजाः पुत्रपौत्रादिरूपाः प्रजोपयोगीनि संसारवहानि साधनानि प्रसूयध्वं । वो युष्माकमेष यज्ञ इष्टकामधुक् ईप्सितमनोरथपूर्तिकरोऽस्तु भूयादिति ॥ १० ॥

पुनश्च पंचभिः श्लोकैः प्रजापतिना प्रजाभ्य आज्ञापितं विवृणोति । अनेन यज्ञेन यज्ञादिकर्मणा देवान् इन्द्रादिदेवान् यूयं भावयत यजत तर्पयत हविर्भागैर्वर्धयत पुनश्च ते इन्द्रयमवरुणकुबेरादिदेवा अपि युष्माकं यजनेन संतुष्टाः संतः वो युष्मान् भावयन्तु पर्जन्यादिदानैरन्यैर्बहुभिः कर्मभिश्च वृष्ट्यन्नसंतानैश्वर्यवैभवादिसुखप्रदानेन वर्धयन्तु रक्षन्तु । देवाश्च यूयं च परस्परं भावयन्तो वर्धयन्तो रक्षन्तः परं सर्वश्रेष्ठं श्रेय. कल्याणमाप्स्यथ प्राप्स्यथेति प्रजापतिराज्ञापयामास ॥ ११ ॥

यज्ञभाविता यज्ञैर्वर्धितास्तोषिता देवा वो युष्मभ्यं हि अवश्यं इष्टान्कामानीप्सितवैभवान् विविधैश्वर्यसुखानि च दास्यन्ते भवतां पुत्रपशुधनैश्वर्यकामनाः पूरयिष्यन्ति । तैर्देवैः दत्तानन्नैश्वर्यधनवैभवादीन् एभ्यो देवेभ्य. अप्रदाय

10 Brahma formerly (at the beginning of the cycle) created mankind together with the sacrifices (actions) and said: "Propagate yourselves by this (sacrifice, disinterested action). May this (sacrifice) yield to you desire."

11 Five more stanzas embody Brahma's injunction to his creatures. Gratify the gods (Indra etc.) with this sacrifice, and may the gods, so gratified, gratify you (with rain etc. conducive to prosperity and selfpropagation). Thus you and the gods, gratifying (nourishing, protecting) mutually, will attain supreme felicity.

12 The gods, gratified by sacrifice, will fulfil your desires (such as sons, cattle, wealth, food etc.) That

यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः ॥
भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात् ॥ १३ ॥
अन्नाद्भवंति भूतानि पर्जन्यादन्नसंभवः ॥
यज्ञाद् भवति पर्जन्यो यज्ञः कर्मसमुद्भवः ॥ १४ ॥

पंचमहायज्ञैर्बलिदानेन वैश्वदेवाग्निहोत्रादिभिर्नित्यनैमित्तिककर्मभिर्यज्ञादिकार्यैः
प्रतिदिनभोजनादिकस्य नैवेद्यादिभिरप्रदायाऽसमर्प्य यो मूर्खस्तैर्देवैर्दत्तांस्तानुप-
भुंक्ते स्वशरीराय कुटुंबिभ्यश्चोपयुनक्ति स स्तेनश्चौर एव ज्ञेय इति भगवान्
प्रजापतिरवादीत् ॥ १२ ॥

पुनश्च भगवान् प्रजापतिः प्रजा आज्ञापयामास—यज्ञशिष्टाशिनः नित्यनै-
मित्तिकयज्ञेभ्योऽवशिष्टं यज्ञशिष्टमश्नन्तः पंचमहायज्ञावशिष्टं प्रतिदिनं गृहस्थैः
क्रियमाणैः कंडनीपेषणीचुल्ल्युदकुंभीमार्जन्युत्थपंचसूनादोषपरिहारकवेदाध्ययन-
होमातिथिपूजनतर्पणबलिप्रदानाख्यपंचमहायज्ञेभ्योऽवशिष्टमन्नमश्नंतो नित्यनैमि-
त्तिकयज्ञावशिष्टं भुंजानाः सन्तः यदा यज्ञावशिष्टं भुंजते तदैव ते मनुष्याः
सर्वकिल्बिषैः पंचसूनाजनितैरन्यैर्मनोवचनकर्मभि कृतैः सर्वपापैर्मुच्यन्ते । परं ये
मनुष्या आत्मकारणात् स्वस्य स्वकुटुंबिनां कृते नित्यभोजनार्थमन्नादिकं पचन्ति
न च देवादिभ्यः देवादिनिमित्तं, ते पापा पापाचाराः सन्ति पुनश्च ते तु
अघं भुंजते सर्वथा पापभागिनो भवन्ति ॥ १३ ॥

अन्नात् रसरक्तमांसमेदोमज्जास्थिपरिणामाद्धीयदि भूतानि पंच महाभूता-
नुबन्धीनि शरीराणि भवन्ति समुत्पद्यंते । अन्नसंभवः अन्नोत्पत्तिः पर्जन्या-

(ignorant) man must be considered a thief who enjoys
(by self and family) what is given by the gods without
offering it to them (through Vaishvadeva, Agnihotra
and other 'great sacrifices' five in number, through pious
acts daily and occasional.)

13 Those who enjoy what remains after per-
forming the daily and occasional sacrifices, are freed
from all sins. But those who cook only for themselves
(and their families, and not for the gods), incur sin.

'All sins' denote those committed by thought,
word and deed. They include the involuntary harming
of insects by the five kinds of implements (mortar and
pestle, grinding stones, broom) पञ्चसूनादोष incidental to
the daily life of all householders.

14 From food are produced all creatures; from
the food; from sacrifice proceeds the
rain is produced

कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् ॥
तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥ १५ ॥

---

द्भवति, पर्जन्यो मेघश्च यज्ञाद्भवति, यज्ञश्च कर्मसमुद्भवः अर्थात् कर्मैव जगदुत्पत्तिस्थितिकारणं, विना कर्म यज्ञाद्यभावस्तेन च जगद्विनाशस्तस्मात्केनापि कदाचिदपि नित्यनैमित्तिककर्मपरिहारः कर्मराहित्यं दुःशकमेव । १४ ॥

कर्म-सर्वप्रकारा ब्रह्मांडस्थप्राणिनां प्रवृत्तिः ब्रह्मोद्भवं ब्रह्मरूपा ज्ञानरूपा ये वेदाः ते एव उद्भवः उत्पत्तिर्यस्य तत् अर्थात् वेदेभ्य एव तस्योत्पत्तिः प्रवृत्तिविस्तारो वा विद्यते तादृशं कर्मास्तीति विद्धि जानीहि। ब्रह्म च अक्षरसमुद्भवं अक्षरः नाशधर्मविरहितः अजन्मा यः शिवो महेश्वरः स एव समुद्भवः उत्पत्तिर्यस्य तादृशं विद्धि । तस्मात् सर्वगतं आब्रह्मस्तंबपर्यंतप्राणिमात्रेषु व्याप्तं यदक्षरसमुद्भवं ब्रह्म नित्यं यज्ञे मंत्रक्रियादिरूपेण इन्द्रयमसूर्यादिदेवरूपेण यजमानाचार्यहोत्रध्वर्युसंभारादिसर्ववस्तुरूपेण प्रतिष्ठितं स्थितमस्तीति जानीहि ॥ १५ ॥

rain, sacrifice results from action.

Food is metabolised into blood and other tissues of the bodies of all creatures, 'भूतानि', so called because their bodies are formed of the transformations of the five 'great elements' पञ्च महाभूतानि. The stanza shows that action is the cause and mainstay of the universe. Without action there would be no sacrifices and the worlds would perish. Hence none can at any time live without going through the necessary actions constant or casual.

15 Know that action is produced from the Vedas, and the Vedas are produced from the Immutable (Lord Shiva) Therefore the all pervading Brahman (the Lord) is ever present in sacrifice.

Action includes the several activities of all creatures in the universe It proceeds from the knowledge (which is the same as Brahman) enshrined in the Vedas. 'All pervading', present in every object from the Creator to a pillar downwards; it is this Spirit which has its origin in the Immutable. Sacrifice is action accompanied by *mantra* offered to Gods like Indra, Yama, the Sun etc.

एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः ॥
अघायुरिन्द्रियारामो मोघं पार्थ स जीवति ॥ १६ ॥

---

एवं अक्षरेण परमेश्वरेण प्रवर्तितं ब्रह्मांडरूपं चक्रं इह जगति जीवमानो यो मनुष्यः ब्राह्मणादिवर्णाश्रमधर्मानुसारेण स्वस्वकर्माणि कुर्वन्न अनुवर्तयति न अनुसरति यज्ञादिकर्माणि परमेश्वरनिर्मितयज्ञादिकर्माणि न करोति न कारयति स्ववर्णाश्रमधर्मानुसारिकर्मभिर्यज्ञं यज्ञेन वृष्टिर्वृष्टेरन्नोद्भवोऽन्नात्प्राणिनामुत्पत्तिरिति क्रमप्राप्तजगदुत्पत्तिप्रवृत्तिरूपयज्ञक्रिया न करोति न कारयति न स्वयमनुसरति नान्यान्प्रेरयति स मनुष्यः अघायुः पापरूपं भूभाररूपं आयुर्जीवितं यस्य तादृशोऽस्ति। त्यक्तनित्यनैमित्तिककर्मा इंद्रियार्थेष्वेवासक्तः इन्द्रियारामः वाक्पाणिपादपायूपस्थादींद्रियवैभवसुखमात्रैकपरायणः अयज्ञशिष्टान्नवर्धितपशुरूपदेहः देवपित्रतिथिसेवाविरहेण देवपित्रतिथीनां शापदग्धकायः स मनुष्यो हे पार्थ अर्जुन मोघं वृथा जीवतीति जानीहि। अर्थात् स्नानसंध्यातर्पणवैश्वदेवदेवपित्रतिथिपूजनश्राद्धनित्यनैमित्तिकयज्ञादिकर्मशून्या मनुष्याः परमेश्वरप्रवर्तितजगच्चक्रक्रमाद्विरुद्धवृत्तयः परमेश्वरनियमविरुद्धाचरणा एव। सृष्टिक्रमविरुद्धकर्मणां तेषां मनुष्योचितकर्मराहित्येन व्यष्टिसमष्टिरूपेण विनाश एव निर्मित. न तेषां जन्मभिः सृष्टेः कल्याणमिति जानीहि ॥ १६ ॥

in the presence of the sacrificer directed by the priests representing different Vedas and in the plenitude of all necessary materials.

16 O Arjuna, he who does not follow the wheel (of the world) which is thus going on, is leading a sinful life, seeking his enjoyment in the (objects of the) senses and he lives in vain.

'Going on' prompted by the immutable Supreme Lord. Following 'the wheel' means obeying its rules oneself and making others too obey them. 'Sinful', as if a burden to the world. 'Seeking his...senses': not doing his daily and occasional duties, engrossed in sense-objects; like the brute's his body is not built by the remains of food which has been offered to the Gods; accursed therefore by Gods, ancestors and guests as he never serves these. Such men are not promoting the welfare of the world by anything that they do.

यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ॥
आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते ॥ १७ ॥

---

इंद्रियारामस्य स्वेंद्रियतुष्टिमेव मनुष्यकर्तव्यपूर्तिं मन्यमानस्य जीवनवैयर्थ्यं दृढयन्नाह यस्त्वात्मेति-यस्तु यो हि इंद्रियाराम इंद्रियार्थपरायणो मनुष्य आत्मरतिः स्वशरीरस्वकुटुंबिजनप्रीतियुक्त एव स्यात् अस्ति, परमेश्वररचितसृष्टिनियमानुसारं जगतोर्थेपि स्वकर्तव्यं यज्ञादिरूपं किमप्यस्तीति न स्वीकरोति स्वार्थैकपरायणोस्ति. पुनश्च य आत्मतृप्त स्वशरीरस्वकुटुंबिजनेभ्यः कृतकर्मभिरेव स्वकर्तव्यपूर्तिं मन्यमानोस्ति न च जगतोऽर्थे स्वकर्तव्यं किमप्यस्तीति स्वार्थवशः। पुनश्च आत्मनि एव संतुष्टः स्वशरीरस्वकुटुंबिजनसुखवैभवैश्वर्यसमृद्धिप्राप्त्या एव संतुष्टो यो मानवोस्ति तस्य मनुष्यस्य कार्यं न विद्यते तस्योत्पत्तिरस्तित्वं जीवितं मरणं च सर्वं वृथैव न कोप्युपयोगो विश्वस्य तस्य जीवितेन । अर्थात् यज्ञादिकर्मणा मनुष्यदेवपितृतिथिजीवानां चोपकारस्तस्य स्वार्थांधस्योदरंभरवृत्तेरथायुष इंद्रियारामस्य मनसि न स्वजीवितहितातिरिक्तं कर्तव्यं विद्यते अत एव तादृशस्य जीवितं च जगतो भाररूपमेव न विश्वोपकारकं न लोकसंग्रहरूपं चेति ॥ १७ ॥

17 But the man who rejoices in himself, is satisfied in himself and is content with himself, has nothing to do.

This confirms that he lives a useless life who thinks that a man's duty is merely to please his senses (Our interpretation differs from that of all others.) 'Rejoices in himself': *i.e.* in his body and in the pleasure of his family, so selfish as to deny that any sacrifice is due from him to the world in accordance with God's ordinances in the universe. 'Satisfied in himself' or in whatever is done by his body or his relations, thinking nothing is due from him to the world 'Content with himself': pleased only if he and his friends are happy and prosperous. 'Nothing to do'. it is all the same for the world whether he was born, lives or will die.

नैव तस्य कृतेनाऽर्थो नाऽकृतेनेह कश्चन ॥
न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥ १८ ॥
तस्मादसक्तः सततं कार्यं कर्म समाचर ॥
असक्तो ह्याचरन् कर्म परमाप्नोति पूरुषः ॥ १९ ॥

पुनश्च तदेव दृढयति नैवेति तस्य मानवस्य कृतेन न कोप्यर्थः तादृशेन स्वार्थैकपरायणवृत्तिना इंद्रियारामेण मनुष्येण लोकलज्जया कीर्तये स्वार्थसिद्धये वा कान्यपि कर्माणि कृतानि चेत्तेन न जगतः कल्याणं नोपयोगो न फलं। तथैव तस्य स्वार्थवृत्तेर्मनुष्यस्य अकृतेन अपि न कोप्यर्थः तादृशेन स्वपुत्रकलत्रैकपरायणेन स्वार्थबुद्धिना यज्ञादिकर्माणि न कृतानि तेनापि तस्य जगतो न कोप्यर्थः न किमपि फलं न किमप्यकल्याणं। अस्य एतादृशस्य स्वार्थैकबुद्धेर्मानवस्य स्वपुत्रकलत्रपशुधनगृहक्षेत्रादिसुखमेव जीवनसाफल्यं मन्यमानस्य सर्वभूतेषु न कश्चित् अर्थव्यपाश्रय अर्थात् तादृशेन मनुष्येण तत्कर्मभिर्वा सर्वभूतानां सर्वप्राणिनां न किमपि कल्याणं कर्मसाफल्यं उपयोगो वा ॥ १८ ॥

उपर्युक्तश्लोकेषु वर्णितस्वात्मप्रीतिस्वात्मतृप्तिस्वात्मतुष्टियुक्तस्य देहात्मपुत्रकलत्रधनादिसंसारप्रलोभनपरायणस्य स्वार्थैकसाधकस्य कर्मवैफल्यं प्रतिपाद्य कथंप्रकारेण कीदृग्वृत्त्या कर्माणि विदधीत तत्तस्मादसक्त इत्यनेन व्यनक्ति— तस्मात् उपरिवर्णितवत् आत्मरतिः स्वात्मसुखेषु प्रीतिमान्, आत्मतृप्तः

18 Whether such a man performs actions or not, it is valueless, because by him has no creature to achieve any interest.

(Similarly in this and the next we differ from other commentators.) 'Such': selfish, sensual, 'performs' through fear of censure, for fame or out of an ulterior motive; 'valueless': not for the world's welfare; 'or (performs) not': *scil.* sacrifices etc (he is engrossed in his own family and it is immaterial if he does not perform anything.) 'By him', *i.e.* by one engrossed in the welfare of his family (or by such a man's works; here अस्य = अनेन मनुष्येण and सर्वभूतेषु=सर्वभूतानां)

19 Therefore, without attachment, always perform the action which has arisen as a duty. He who performs action without attachment reaches the Supreme Lord.

कर्मणैव हि संसिद्धिमास्थिता जनकादयः ॥
लोकसंग्रहमेवापि संपश्यन् कर्तुमर्हसि ॥ २० ॥

---

स्वात्मोपलब्धसुखैः स्वात्मानं कृतकृत्यंमन्यः, आत्मसंतुष्टः स्वात्मोपभुक्तसुखैः प्रसन्नो मानवः निष्फलजीवितः कथ्यते एतस्मात् कारणात् त्वं असक्तः सन् कार्यं कर्म यद्यद्यदा यदा कर्तव्यं नियतं कर्म समापतेत्तत्तत्सर्वं सततं यावज्जीवं समाचर इन्द्रियाणि मनसा नियम्य अनासक्तिमान् सन् कस्मिन्नपि कर्मणि स्वार्थबुद्धिहीनो भूत्वा कर्मफलाशां परित्यज्य मुक्तसंगः सन् कुरु । यतः संसारे वर्णाश्रमधर्मप्रवृत्तोऽपि स्वार्थबुद्धिविरहेण असक्तः पुत्रकलत्रैश्वर्यादिसुखेष्वलुब्धो यः पुरुषः यः कोपि मनुष्यः परमेश्वरार्पणबुद्ध्या जगत्कल्याणवृत्त्या सृष्टिनियमाननुसरन् नित्यनैमित्तिकसंसारव्यवहारोचितानि कर्माणि कुर्वन् पर अक्षरब्रह्मरूपं जन्ममरणरहितं महेश्वरं हि अवश्यं आप्नोति प्राप्नोति ॥ १९ ॥

मुक्तसंगेनाऽनासक्तया क्रियमाणैः कर्मभिः सिद्धिं वर्णयति कर्मणैवेति–कर्मणा एव अनासक्त्या स्वार्थबुद्धिविरहेण कृतकर्मणा जनकादयः संसारव्यवहारस्थिता अपि संसिद्धिं ब्रह्मैक्यप्राप्तिरूपां मोक्षाभिधां सिद्धिं आस्थिताः प्राप्ताः । नाहं जनकादिकोटिमापन्नः सर्वथा न मे त्यागवृत्तिर्नितांतं वा संसारव्यवहारासक्तोऽहं न मुक्तसंगो वा अतोऽहं कथं असक्तः सन् कर्माणि कर्तुं शक्नुयां इत्याशंकायां मार्गांतरं दर्शयन्नाह लोकेति–लोकसंग्रह एव लोकानां धर्मे प्रवर्तनमधर्मान्निवर्तनं एतादृशो यो लोकसंग्रहस्तं संपश्यन् अहं विद्वान् महान् शूरो राज्यकर्ता राजकुलोत्पन्नः

'Therefore', since a self-bound man lives in vain; 'without attachment' or self-interest, controlling the sen-es by the mind. 'Performs' selflessly; without attachment', unsubdued by the glamour of selfish happiness; 'action' though *incidental to his class and stage in life*, offering it to the Divine, and conducive to the world's welfare as it is in conformity with the ordinances of the universe.

The result of selfless action is absolution:

20 Janaka and others reached perfection through action alone. For the sake of the proper government the world, too, you must perform action

'Reached' though engaged in worldly activities. You might ask, "I have not reached the level of men like Janaka; I can't renounce worldly work entirely, nor

यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ॥
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥ २१ ॥

---

क्षत्रियः स्वपराक्रमेण जगति विख्यातनामा सोऽहं लोके व्यवहारे कानि कीदृशानि
कर्माणि करोमि यानि लोका अनुसरेयुरिति विचार्यापि सामयिकानि सर्वाण्य-
न्यानि वा कर्माणि कर्तुमर्हसि ॥ २० ॥

तमेव हेतुं विशेषेण द्रढयति—श्रेष्ठ' विद्याजातिकुलगोत्रकर्मादिभिर्जगति
ख्यातनामधेयो मनुष्यो यद्यच्छुभाशुभं प्रशस्तं गर्हितं वा कर्म कर्माणि आचरति
इतरो जनो लोकः तमनुसरंस्तमादर्शभूतं मन्यमानस्तत्तत्कर्म तेन महापुरुषेणा-
चरितानि कर्माणि आचरति करोति तत्तत्कर्माचरणे लोकानां मनोवृत्तिर्जायते ।
स श्रेष्ठो महानग्रणी राजकर्ता ख्यातकीर्तिर्जनो यत् यद्यत्कर्म प्रमाणं कुरुते
आचरणीयमिति स्वदृष्टांतेन प्रमाणयति शास्त्रसिद्धं शास्त्रविरुद्धं वा शुभमशुभं
वा श्लाघ्यं निंदितं वा हेयमुपादेयं वा स्वयमाचरति लोको जनसमाजस्तत
तत्कर्मानुष्ठानमेव श्रेयस्करं मन्वानोऽनुवर्ततेऽनुसरति विश्वस्तः सन् कुरुते ॥२१॥

am I too greatly engrossed in it; still less is attachment
absent from me. How then am I to work unattached?"
The reply is "For the sake, etc." The proper govern-
ment is by inculcating good and restraining from evil.
"I am learned and heroic, a ruler born in a royal
warrior family, world-famous by my prowess; what
example shall I set the people?" Thus should you think
before acting in the world.

The motive adduced above is further corroborated:

21 Whatever a great man does, that other men
do; the people follow the standard he sets.

'Whatever' good or bad. 'Great man': famous
for his learning, caste, family, tribe, action etc. 'Other
men do,' taking that great-souled one as their ideal,
being prompted to imitate him. 'Sets' by his own
action, lawful or unlawful, praiseworthy and imitable
or the reverse of these. Society gets such faith in him
that they think whatever he does it will conduce to their
own welfare to do.

न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किंचन ॥
नानवाप्तमवाप्तव्यं वर्तेऽथ च कर्मणि ॥ २२ ॥
यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः ॥
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥ २३ ॥

---

स्वकीयदृष्टान्तेन तमेव विशदयति—हे पार्थ अर्जुन, मे मम त्रिषु लोके किंचन कर्तव्यं नास्ति किमपि कर्म करणीयमिति न विद्यते। यतोऽहं ब्रह्मणि महेश्वरे ऐक्यं गतो ब्रह्मणि निष्ठो ब्रह्ममयोस्मि। त्रिषु लोकेषु मम किंच वस्तु अनवाप्तं अप्राप्तं अनुपलब्धं न। तथैव त्रिषु लोकेषु एतादृशं किमपि कर्म वस्तुजातं वा न विद्यते यत् मे अवाप्तव्यं प्राप्तुं योग्यमस्ति यत्प्राप्तये ह्युत्सुको भवेयमिति। अथच तथापि अहं कर्मणि यदा यदा यत्कर्मोपस्थितं भवति तत्तद्विहितुं कर्तुं लोकसंग्रहार्थमेव प्रवृत्तो भवामि ॥ २२ ॥

यदि अहं अतंद्रितः तंद्रा प्रमादस्तद्रहितो भूत्वा अप्रमत्तः अनलसः सावधानः सन् कर्मणि जातु कदाचित् कचिदपि अपवादरूपे प्रसंगेपि कर्मणि न वर्तेयं चेत् तदा हे पार्थ अर्जुन मनुष्याः प्रजा मम वर्त्म मयांगीकृत मयाऽऽचरितं मार्गं सर्वशः सर्वप्रकारेण यं यं मार्गमहं स्वीकुर्यां यद्यत्कर्माऽऽचरणमहमनुसरेयं तं तं मनुष्या अनुवर्तेरन् अनुसरेयुः अत कारणात् व्यवहारे लोके ऐहिकामुष्मिकादिकर्माणि प्रमादहीनः सन् प्रतिकर्मणि प्रवर्ते सततं प्रवृत्तो भवामि ॥ २३ ॥

He holds forth his own action as an example in point:

22 O Arjuna, there is nothing in the three worlds that I have to do (as I am one with Brahman and the supreme Lord) There is nothing unobtained that I want to obtain, still I perform actions (Though there is no necessity for me to perform actions, I am engaged in them, to lead men on the right path of duty.)

23 For if I should not at any time (even when liable to censure) be carefully engaged in action, mankind would all follow my example (Therefore I am ceaselessly engaged in works designed for this world and the next, as each falls due)

उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् ॥
संकरस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः ॥ २४ ॥
सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत ॥
कुर्याद्विद्वांस्तथाऽसक्तश्चिकीर्षुर्लोकसंग्रहम् ॥ २५ ॥
न बुद्धिभेदं जनयेदज्ञानां कर्मसंगिनाम् ॥
योजयेत्सर्वकर्माणि विद्वान् युक्तः समाचरन् ॥ २६ ॥

यदि अहं कर्म न कुर्यां चेत् तदा कर्मलोपेन यज्ञादिकर्मविनाशेन वृष्ट्यभावा-
भावादिमे मयाऽऽचरितमार्गानुसृता लोकाः श्रीकृष्णस्याचरणमेव प्रमाणमिति
मत्वा स्वस्ववर्णाश्रमोचितकर्मबहिर्मुखा भूत्वा उत्सीदेयुर्नश्येयुः । कर्मसु नष्टेषु
यज्ञादिक्रियालोपेन प्रजा वर्णसंकरा भवेत् तदा तत्संकरदोषस्य कर्ता अहं
स्यां पुनश्च वर्णसंकरदोषेण अहं इमाः प्रजा उपहन्यां प्रजानां लोकानां
विनाश एव स्यात् तदा प्रजानां विनाशकृद्दोषो मच्छिरस्येवाऽऽपतेत् ॥ २४ ॥
अविद्वांसः सामान्याः संसारव्यवहारमग्ना जनाः कर्मणि विविधैहिका-
मुष्मिककर्मसु सक्ता लुब्धाः प्रीतिमंतः कर्मोत्पन्नसुखदुःखाभिभूताः संतः कर्माणि
यथा कुर्वन्ति कुर्युः हे भारत अर्जुन विद्वान् शास्त्रज्ञो लोकसंग्रहं चिकीर्षुः स्वाच-
रणेन लोका अपि स्वस्वकर्मणि प्रवर्तेरन्निति कामयमानो विद्वान्मनुष्यः असक्तः
सन् तत्तत्कर्मसु अलुब्धः अनासक्तः तत्तत्कृतकर्मफलाभिलाषवर्जितः अनहंकार-
विमूढात्मा सन् सामान्यमनुष्यवत् लौकिकानि कर्माणि कुर्यात् ॥ २५ ॥
अज्ञानां तत्त्वज्ञानहीनानां कर्मसंगिनां परंपरया प्राप्तसर्वकर्मप्रवृत्तानां जनानां
बुद्धिभेदं न जनयेत् । तत्त्वज्ञानेन ब्रह्मज्ञानेनैव मोक्षोऽस्ति न केवलं कर्मभिरिति

24 These worlds would be plunged into disaster, if I do not perform action. I would be the author of the confusion of functions and would doom mankind to destruction.

'Disaster', *e g* for want of rain consequent on the cessation of sacrifice (*vide supra* for 'the cycle of the world.') As men would follow me in this abstention, I would be responsible for the resulting confusion and ruin.

25 Just as, O Arjuna, the ignorant act from attachment to action, so the wise man should act without attachment, desiring the welfare of mankind (in order that mankind may follow his example).

26 (Though) fixed in Yoga, a wise man should

प्रकृतेर्गुणसंमूढाः सज्जन्ते गुणकर्मसु ॥
तानकृत्स्नविदो मन्दान् कृत्स्नविन्न विचालयेत् ॥ २९ ॥

---

प्रकृतेर्भगवन्मायाया गुणसंमूढा गुणैः सत्वादिगुणैः संमूढाः सम्यक् मुग्
संसारे देहपुत्रकलत्रादौ मोहावृताः तेष्वेवात्मभावं मन्यमानाः गुणकर्मसु सत्
दिगुणेषु तत्कार्येषु च सज्जन्ते आसक्तिं भजंते आत्मीयबुद्धिं सर्वत्र कुर्वा
तान् अकृत्स्नविदः संपूर्णत्वेन ब्रह्मतत्त्वाऽनभिज्ञान् अत एव मन्दान् मन्दमतं
मायया कुंठितबुद्धीन् अज्ञान् कृत्स्नवित् परिपूर्णात्मतत्त्वज्ञो ब्रह्मज्ञो

according to the proportion of each quality present them, and 'of actions' meaning the distribution of pe ception, audition etc. as inherent to the eye, the e etc. respectively. One who discriminates thus, thinkin that the principles of *Maya* determine all works of th body and the senses and that men are not the cau e c the principles and their working (since the feeling ' am the doer' is a delusion), knows that it is Prakrit which carries out all action and understands that he i not the doer or enjoyer nor is the family his property His wisdom is that of the knower of Brahman, he i not entangled in the world process He resolves every thing into the thought, 'The principles exist for thei objects.' Men characterised by the natural qualities o goodness etc. are attracted to men similarly characteri-ed, they act and exist only as bound by those qualities. (We might recall a subtle association of meaning: गुण= string or binding material) Their mutual action and re-action are thus determined; their association as son and father, wife and husband etc is thus specified. So under-standing the matter, one knows all this is a play of the Lord's inscrutable power माया; one is not attached to the body, family etc. or to their activities nor led away by their glamour. One no longer labours under the illusion that the body is the doer and enjoyer.

29 Those who are deluded by the three qualities

मयि सर्वाणि कर्माणि संन्यस्याऽध्यात्मचेतसा ॥
निराशीर्निर्ममो भूत्वा युद्ध्यस्व विगतज्वरः ॥ ३० ॥

...लयेत् कर्मभ्यः कर्मनिष्ठायाः न प्रचालयेत् न च्यावयेत्। कर्म, कर्म-
..., कर्ता सर्व मिथ्यैव त्वमहं सर्वे लोकाश्च ब्रह्मरूपिणोऽत. केन न किमपि
... कर्म कर्तुमहमावश्यकं वा इत्यादिभिर्वाक्यैः अप्रज्ञान् स्वस्वकर्मभ्यो
विक्षेपयेत् प्रत्युत सामान्यमानवान् कर्मप्रशंसयाऽऽचरणेन च कर्मस्वेव
...र्तयेत् ॥ २९ ॥

त्वं कृत्स्नतत्त्वविदसि ब्रह्मज्ञोसि अतः सर्वाणि कर्माणि अध्यात्मचेतसा
...ज्ञानयुक्तबुद्ध्या ज्ञानदृष्ट्या मयि ब्रह्मरूपिणि अक्षरे महेश्वरे मयि संन्यस्य
... ममान्तर्यामीश्वर एव कर्ता नाहमिति बुद्ध्या अर्पयित्वा ब्रह्मरूपिणि
...मामनि सर्वेकर्मणां समर्पणे। निराशी फलाकांक्षाविरहितो भविष्यसि
... निर्मम अयं मे भ्राताऽयं मे गुरुर्बन्धुरिदं मया कृतमिमे मया हता
...त्यादिभावविरहितो ममत्वशून्यो भविष्यसि तथाभूतस्त्व पश्चाद्विगतज्वर गत
...सन्तापो गतशोकदुःखसंदोहो भूत्वा युध्यस्व ॥ ३० ॥

...of Nature, become attached to the actions of those qualities
The man of perfect knowledge should not unsettle these
ignorant men of imperfect knowledge (from their respective duties)

'Deluded' ascribing selfhood to the body, family etc 'Become attached,' confounding one's self with all that Imperfect knowledge is defective knowledge of the Supreme; 'ignorant' with intellect dulled by *Maya* 'Unsettle', by the old doctrine that everything is illusion; that everything being Brahman, none has to do anything Ordinary folk have to be persuaded to act by praising action

30 Therefore, surrendering all actions to me, by joining your mind to the supreme Self, and becoming freed from the desire of reward and freed from egoism, eng... battle without grief.

प्रकृतेः क्रियमाणानि गुणैः कर्माणि भागशः ॥
अहंकारविमूढात्मा कर्ताहमिति मन्यते ॥ २७ ॥

बुद्धिभ्रमं नोत्पादयेत् किमुत युक्त योगयुक्तात्मा योगसंनिविष्टः ये सर्वं ब्रह्ममयं विश्वं पश्यन्नपि विद्वान् नित्यनैमित्तिकानि ... कराणि सर्वकर्माणि आचरन् कुर्वन् सन् स्वाचरणेन लोकान् योजयेत् प्रेरयेत् ॥ २६ ॥

प्रकृतेः भगवद्ब्रह्मरूपिमहेश्वरमायाया गुणैः सत्वरजस्तमःसंज्ञकैः न्यूनातिरेकमध्यमादिभेदेन जगति दृश्यमान्यैः यथा च ... नतमोभिः अधिकरजोमध्यमसत्वहीनतमोभिः अधिकतमोमध्यमसत्वहीनरजोभि इत्यादिभेदैर्मनुजेषु विद्यमानैरत एव भागशः व्यक्तिसमष्टिषु च नानाभेदैर्विभक्तैस्त्रि भिर्गुणैः देहेन्द्रियद्वारा कर्माणि क्रियमाणान्येव सन्ति अर्थात् सर्वाणि कर्माणि मनुष्यः स्वेच्छया स्वबुद्धिपूर्वकं न करोति प्रत्युत प्रकृतिमायासंभवैर्न्यूनाधिका दिभेदेन सर्वत्र विभक्तैस्त्रिगुणैः पूर्वजन्मार्जितप्रारब्धवशात् कर्माणि सृष्टिनिय मानुसारेण भवन्ति परंतु अहंकारविमूढात्मा अहंकारो देहपुत्रकलत्रादौ योऽभि मान आत्मनो भिन्नेषु देहपुत्रकलत्रादौ आत्मबुद्धिरहंममत्वभावस्तेन विमू मोहवशंगत आत्मा मनो यस्यासौ मनुष्यः अहं कर्ता मयायं पुत्र उत्पादितः ममायं पुत्रः कलत्रं धनं धान्यं गृहं इति मन्यते वस्तुतः स किमपि कर्तुमशक्त परवानेव ॥ २७ ॥

prompt others to all kinds of actions by his own (exemplary) conduct, and not unsettle the minds of the ignorant who are attached to action.

'Fixed in yoga', seeing the Brahman in everything (so far as he is concerned). 'Unsettle the minds' by preaching that knowledge of the Brahman alone leads to salvation and not any kind of action. 'The ignorant', those who are not ripe for true knowledge; 'attached to action', going through certain sets of rituals from generation to generation.

27 Actions are performed by the three qualities of Nature (acting) in different proportions, but one whose mind is deluded by egoism thinks that he is performing them.

'Qualities' goodness, passion and darkness of Nature

ये मे मतमिमं नित्यमनुवर्तन्ति मानवाः ॥
श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते सर्वकिल्बिषैः ॥ ३१ ॥

---

श्रुतिस्मृतिब्रह्मसूत्रधर्मसूत्रधर्मशास्त्रैः प्रतिपादितं सनातनश्रुतिस्मृत्यादीननुसृत्य मया तुभ्यमुपदिष्टं इदं मे मतं ये श्रद्धावन्त. श्रीकृष्णनिर्णीतं शास्त्रानुकूलमेवास्तीति निश्चयवन्तः पुनश्च अनसूयन्तः दोषारोपणमकुर्वाणाः अर्थात् श्रीकृष्ण को नाम विद्वान्, श्रीकृष्णो विद्वान् शूर शास्त्रज्ञः सन्नपि क्षत्रियात्मजो न तस्याधिकारो धर्मशास्त्रोपदेशे इत्यादिभावैरुत्पन्ना या असूया तेजोऽसहिष्णुता सा यैस्त्यक्ता तादृशा ये मानवा मनुष्या नित्यं अनुवर्तन्ति अनुवर्तन्ते अनुसरंति ते सर्वकिल्बिषे सर्वपापैः स्वकृतकर्मजनितपापादिभिर्मुच्यन्ते ॥ ३१ ॥

ये तु मनुष्या एतन्मे मतं अभ्यसूयंतः अभि अभितः सर्वतः प्रतिस्थलं असूयन्तः मत्तेजोगुणद्धर्यादीनामसहिष्णव "असूयाऽन्यगुणर्द्धीनामौद्धत्यादसहिष्णुता" (सा. द.)

As for you, Arjuna you have perfect knowledge of the Brahman, so make over your action to Me the immutable Supreme, thinking not you but the immanent Lord is the Agent. Thus surrendering you will be free from desire, no longer thinking 'This is my brother, teacher, relation; this I have done, these I have killed.' Thus will all your grief and delusion disappear and you become fit for action.

31 Those who always follow this teaching of mine with faith and without envy, are also released from all sins.

'This teaching' is in accordance with the eternal religion propounded by the texts heard and remembered, the aphorisms on Brahman and on Dharma and other Dharma Shastras. 'Faith' that what Lord Krishna has said is in conformity with scripture 'Envy' is ascription of some disqualification like 'Who is this Lord Krishna? He may be wise, heroic, learned in the sciences; yet is he the son of a warrior: who authorised him to teach scriptural subjects?' 'All sins' and their effects.

ये त्वेतदभ्यसूयन्तो नानुवर्तन्ति मे मतम् ॥
सर्वज्ञानविमूढांस्तान् विद्धि नष्टानचेतसः ॥ ३२ ॥
सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि ॥
प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ॥ ३३ ॥
इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ ॥
तयोर्न वशमागच्छेत्तौ ह्यस्य परिपन्थिनौ ॥ ३४ ॥

---

एतन्मयोपदिष्टं श्रुतिस्मृत्यादीननुसृत्य प्रतिपादितं मे मतं मम धर्मं सिद्धांतं निन्दन्तः सन्तो न अनुवर्तन्ति नाऽनुवर्तन्ते तान् सर्वज्ञानविमूढान् विशेषतः सर्वकर्मज्ञानबहिर्मुखान् अचेतसः अज्ञानिनः विनष्टान् विशेषतया इहामुत्रलोकभ्रष्टान्विद्धि ॥ ३२ ॥

शास्त्रप्रतिपादितमतस्य जनानां नानुसरणे किं कारणं तद्दर्शयति सदृशमिति–मनुष्यो ज्ञानवानपि श्रुतिस्मृत्यादिशास्त्रज्ञः सन्नपि स्वस्याः प्रकृतेः सदृशं पूर्वजन्मकृतशुभाशुभकर्मसंस्कारजन्यस्वभावः प्रकृतिस्तस्या प्रेरणया स्वयमनिच्छमानोऽपि चेष्टते यत्किंचित् तदनुसृत्य तदनुरूपं वर्तते । भूतानि सर्वप्राणिमात्रसत्वानि प्राणिनः प्रकृतिं यान्ति पूर्वजन्मार्जितशुभाशुभकर्मनिर्मितप्रारब्धवशतां अनुवर्तते प्रारब्धपरवशतया तत्प्रेरणया यावज्जीवं कर्माणि कुर्वंति एवं सति अत्र शुभाशुभकर्मप्रवृत्तौ निग्रहः शास्त्रांकुशः विधिनिषेधरूपा शास्त्राज्ञा किं करिष्यति किंकर्तुं क्षमा ? न किमपि ॥ ३३ ॥

एवं सत्यपि मनसा इंद्रियनिग्रहेण श्रेयःप्राप्तिसाधनमस्तीति वदति–इंद्रियस्य मनसः इन्द्रियस्यार्थे इन्द्रियग्राह्यपदार्थे रागः प्रीतिः द्वेषः अप्रीतिः द्वौ

32 But those who enviously do not follow this teaching of mine, are doomed to disaster in this world and the next, deluded as they are in all knowledge and devoid of discrimination.

He next expounds why people do not follow the teaching of scripture:

33 Even the knowing man behaves (involuntarily) in conformity with his own nature (as formed by the latent power of the merits and demerits of his previous birth.) All creatures act in response to the constitution of their nature. What can restraint (in the form of *scriptural enjoinment or prohibition*) *avail ?* (*It cannot* avail.)

Even though it is so, salvation comes by res-

श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ॥
स्वधर्मे विधनं श्रेयः परधर्मोदयादपि ॥ ३५ ॥

---

व्यवस्थितौ स्त. । यथाच श्रोत्रेंद्रियस्य मनस. श्रवणरूपेर्थे शुभे प्रीतिर· शुभे द्वेष., नेत्रेंद्रियस्य मनसः शुभे दर्शनरूपेऽर्थे प्रीतिरशुभे द्वेष इत्थं प्रतींद्रियस्य शुभेऽशुभे मनस. प्रीतिद्वषौ व्यवस्थितौ प्राक्तनसंस्कारेण प्रकृति· सिद्धावेव । अत ऐहिकामुष्मिककल्याणेप्सुर्जनस्तयो रागद्वेषयोर्वशं न आगच्छेत् तौ रागद्वेषौ हि अवश्यं अस्य मानवस्य इहामुत्रकल्याणस्य परिपन्थिनौ विघ्नरूपौ स्तः अत. स्वश्रेय.कामो जनस्तयो रागद्वेषयोर्वशं न आगच्छेत् न प्राप्नुयात् ॥ ३४ ॥

मुख्यत्वेन परलोककल्याणार्थमेव रागद्वेषत्यागो योगयुक्तबुद्धीनामेव विशेष· तया युज्यते त्वादृशाणां क्षत्रियाणां न प्रतिकर्मणि तत्संगच्छतीति भावेन पुन क्षत्रिय· धर्मेर्जुनं प्रेरयन् वर्णाश्रमधर्मांकिं विशदयति श्रेयानिति–प्रतिव्यक्तेः स्वधर्मः जन्मत एव ब्राह्मणक्षत्रियवैश्यशूद्रातिशूद्रादीनां शास्त्रनिर्णीतो यः स्वस्वधर्मः स स्वबुद्धौ

training the senses through the mind: (Mind in the form of) sense has either affection or aversion for the objects of sense.

34 (Mind as the sense of audition has affection or aversion for pleasant or unpleasant sounds respectively, by immemorial habit The same holds good for the other senses and their objects.) One (wishful of welfare here and hereafter) must not submit to these two feelings, for they are obstacles in his path (of the twofold welfare.)

"Especially, however, the abandonment of attachment and aversion would be proper for those with intelligence fixed in Yoga, and chiefly in view of welfare in the next world; but for warriors like you it is not applicable under every circumstance." With this idea the Lord impresses on Arjuna the warrior's duty and expounds the doctiine of the duties of the several classes and stages of life:

35 One's own duty, (though) unattractive, is moer conducive to welfare than another's duty well performed Annihilation (while engaged) in one's duty is preferable

विगुणोपि कस्मिंश्चिद्विषये गुणहीनो दोषरूपः प्रतीयमानोपि स्वनुष्ठितात् परधर्मात्
सम्यक्प्रकारेण लोकदृष्ट्या सुष्टुप्रकारेणाचरितादपि स्वधर्म एव श्रेयान्
कल्याणकरोस्ति। यथाहि—ब्राह्मणस्य स्वाध्यायादिरूप. स्वधर्मस्तत्र भिक्षाशनादि-
विगुणत्वदोषः कस्यचिद् बुद्धौ विद्यमानोऽपि क्षत्रियधर्मो शौर्यवीर्यादिना ब्राह्मणेन
सम्यक्तया पालितोपि क्षत्रियधर्माचरणेन ब्राह्मणस्य विविधवैभवसुखोपलब्धिरूपं
श्रेयो विद्यमानमपि ब्राह्मणस्य ब्राह्मणधर्म एव श्रेयान्। तथैव क्षत्रियवैश्यशूद्राणामपि
स्वस्ववर्णधर्मपालनरूप' स्वधर्म एव श्रेयान्। न ब्राह्मणस्य क्षत्रियवैश्यशूद्राणां,
न क्षत्रियस्य ब्राह्मणवैश्यशूद्राणां, न वैश्यस्य ब्राह्मणक्षत्रियशूद्राणां, न शूद्रस्य
ब्राह्मणक्षत्रियशूद्राणां नातिशूद्राणामंत्यजश्वपचम्लेच्छचांडालादीनां ब्राह्मणक्षत्रिय-
वैश्यशूद्राणां वा धर्माः श्रेयस्करा। तथैव ब्रह्मचर्याश्रमवर्तिनो न गृहस्थ-
वानप्रस्थसंन्यासिनां, न गृहस्थाश्रमस्थस्य ब्रह्मचारिवानप्रस्थसंन्यासिनां न
वानप्रस्थस्य ब्रह्मचारिगृहस्थवानप्रस्थानां वाऽऽश्रमधर्मा. श्रेयस्कराः संति।
परधर्मोदयादपि परधर्मे एकवर्णस्य स्वधर्मापेक्षया अन्यवर्णधर्मे एकाश्रमिण
स्वाश्रमापेक्षया अन्याश्रमधर्मे स्वकीय उदयो भवेत् ऐहिककल्याणं सुखं वा
प्राप्नुयात्तथैव स्वधर्मे स्वजन्मसिद्धे वर्णे आश्रमे वा निधनं भवेत्तथापि
तदेव तस्य श्रेयः कल्याणरूपमस्ति। परमेकवर्णस्यान्यवर्णधर्माचरणेन उदयः
स न तस्मै श्रेयस्करः। यथाच ब्राह्मणस्य क्षत्रियवैश्यशूद्राणां धर्माचरेणन
उदयः सुखवैभवादिप्राप्त्यपेक्षया स्वाध्यायरूपब्राह्मणधर्माचरणपूर्वकं मरणमेव
तस्मै श्रेयस्करं तथैवान्यवर्णेभ्यः सर्वाश्रमेभ्यश्च ज्ञेयं ॥ ३५ ॥

to prosperity (attained by engaging) in another's duty.

'Own duty' is what is specified by sociological science for each individual by his birth as a priest, warrior, trader or farmer, servant or one of a lower order (*i. e.* Brahmin, Kshatriya, Vaishya, Shudra or outcast respectively) 'Unattractive', devoid of merit, or even harmful, to one's mind. 'Well performed' from the worldly standpoint. Thus study etc are enjoined on a Brahmin, of which begging food etc may not appeal to some, while the Kshatriya's duty may be easy of performance to a Brahmin on account of heroic qualities in him and may also bring him wealth and enjoyment. Still the Brahmin's duty alone is good for Brahmins, the Kshatriya's for Kshatriyas and so for the other

अर्जुन उवाच

अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः ॥
अनिच्छमानोऽपि बलादाक्रम्येव नियोजितः ॥ ३६ ॥

---

अर्जुन उवाच ।

अथेति—अथ यदि भवदुक्त्यनुसारेण ज्ञानवानपि स्वप्रकृतिकारणेन प्रकृतिसदृशं यदि चेष्टते यदि च रागद्वेषावेव मोक्षस्य परिपन्थिनौ विघ्नकराविति मनुष्यो जानाति तथापि अयं पूरुष केन प्रयुक्तः प्रेरितः सन् पापं चरति आचरति करोति ? स्वयं स्वबुद्धौ स्वमनसि तत्पापं कर्तुं अनिच्छमानोपि तत्पापकरणात्स्वाधोगतिर्भवतीति जानन्नपि बलात् हठात् आक्रम्य दंडमुद्यम्याऽऽज्ञापयन्निव पापकर्मणि नियोजित व्यापारितः सन् केन सत्ताधारिणा राज्ञा किंकर इव प्रयुक्तः प्रेरितः सन् पापं कुकर्मरूपं दुर्गतिप्रदं किल्बिषं चरति आचरति अनुतिष्ठति ? ॥ ३६ ॥

classes. The Kshatriya's, Vaishya's and Shudra's duties are not conducive to a Brahmin's welfare; and so for the others; the Brahmin's, Kshatriya's, Vaishya's or Shudra's duties are not beneficial to outcasts and barbarians ( *Chandalas*, *Mlechchhas* etc ) Similarly to a student ( Brahmacharin ) the duties of the householder, retired man or the ascetic ( Grihastha, Vanprastha, Samnyasin respectively ) are not advantageous, and so on to one belonging to any of the other three stages in life.

*Arjuna said:*,

36 But prompted by what does a man *commit sin*, even though unwilling, as if *attacked* and *forcibly led* on to do so ?

'But': if, as you say, even a wise man follows his nature and recognises attachment and repulsion to be the obstacles in the path of salvation, 'unwilling' in his own mind, knowing that the commission of sin will lead to downfall, 'led on' as by a superior force or authority.

भवत्येष कथं कृष्ण कथं चैव विवर्धते ॥
किमात्मा कः किमाचारस्तन्ममाऽऽचक्ष्व पृच्छतः॥ ३७ ॥

श्री भगवानुवाच

एष सूक्ष्मः परः शत्रुर्देहिनामिन्द्रियैः सह ॥
सुखतंत्र इवासीनो मोहयन्पार्थ तिष्ठति ॥ ३८ ॥

---

पुनरग्रेऽपि तमेवप्रश्नमर्जुनो विवृणोति—हे कृष्ण (१) अयं शत्रुसमः शत्रुत्वे-
न प्रतिपादितः पापप्रेरको दोषः कथं भवति समुत्पद्यते, (२) उत्पद्य च कथमेव
विवर्धते, (३) तद्दोषस्य आत्मा स्वरूपं किं कीदृशमस्ति, (४) स कः कोऽस्ति
किमाख्योऽस्ति, (५) तस्य दोषस्य किं आचारः कीदृगाचरणमस्ति एतत्सर्वं
किमस्ति तत्राहं मूढोऽस्मि अत· पृच्छतः प्रश्नं कुर्वतो मम त्वं आचक्ष्व ब्रूहि ॥३७॥

श्रीभगवानुवाच

अर्जुनस्य प्रश्नपंचकस्योत्तरं क्रमेण श्रीकृष्णो विवृणोति--(१) भवत्येष कथं
एतत्प्रथमप्रश्नोत्तरं—हे पार्थ अर्जुन एष कामक्रोधरूपोऽहंकारदोषः सूक्ष्मः
मनसाप्यतर्क्यं इन्द्रियाणामप्रत्यक्षो देहिनां शरीरिणां सूक्ष्मत्वादप्रत्यक्षस्वभावात्
इंद्रियेष्वन्तर्हितः इंद्रियैक्यंगतः· सुखतंत्र इव सुखरूपे दुःखावाप्तिशंकाविरहिते
स्थाने निश्चित इव आसीन इंद्रियेषूपविष्ट इव स्थितः अत एव स्वाधाररूपैरिन्द्रियैः
सह मोहयंस्तिष्ठति विपरीतंदेहात्मज्ञान आरोपयन् स्थितिं करोति । सोऽहंकारो
देहिनां पर· सर्वोत्कृष्टो महान् शत्रुरस्तीति जानीहि ॥ ३८ ॥

37 O Krishna, how does this evil (verily a mis-leading enemy) arise? How does it grow after having arisen? What is its nature? What is it? How does it work? All these things (I do not understand, there-fore) I ask you, tell me.

*Shri Krishna Said*:

38 This (egotism in the form of desire and anger) is subtle, O Arjuna, abiding as if happily with the senses of men, deluding (all creatures). This is the greatest enemy.

Answer to Arjuna's first quetion. 'Subtle', not to be apprehended by the mind or the senses. 'Deluding,' (along with its basis the senses), confounding the soul with the body.

कामक्रोधमयो घोरः स्तंभहर्षसमुद्भवः ॥
अहंकारोऽभिमानात्मा दुस्तरः पापकर्मभिः ॥ ३९॥
हर्षमस्य निवर्त्यैष शोकमस्य ददाति च ॥
भयं चास्य करोत्येष मोहयंस्तु मुहुर्मुहुः ॥ ४० ॥

---

कथं चैव विवर्धते इति (२) द्वितीयप्रश्नोत्तरं—

कामक्रोधमयः कामक्रोधाभ्यां निभृतः कामक्रोधावेव यस्य स्वरूपमरि स कामक्रोधस्थितः । घोर इहामुत्रदारुणफलप्रदो भयंकरः । स्तंभः दुराधर्षो भिमानः हर्ष आनंदः द्वयोः समुद्भव उत्पत्तिर्यस्य सोऽभिमानात्मा अभिमा एव आत्मा स्वभावो यस्य सोहंकारोस्ति । यः पापकर्मभिः जन्ममरणपर्यवम विनिमित्तभूतानि यानि पापानि अघानि तद्रूपाणि कर्माणि येषां तैर्मनुष्यैर्दुस्तर दुरतिक्रमोस्ति तदाक्रमणान्निर्गंतुं मनुष्या न शक्नुवन्ति ॥ ३९ ॥

किमात्मेति ३ तृतीयप्रश्नोत्तरं

एषोहंकारः प्रथमं हर्षमुत्पादयति परं तं हर्षं तत्क्षणं स्वयमेव नाशयति एषोऽहंकारः अस्य मानवस्य स्वयमेवोत्पादितं हर्षं निवर्त्य पुनश्चास्य मानवस्य स एवाहंकारस्तत्क्षणं शोकं ददाति अर्पयति । पूर्वं स एवाहंकार ऐश्वर्यधन-कलत्रपुत्रादिप्रदानेन हर्षं दत्वा पुनश्च रोगप्रियवियोगादिना शोकं ददाति पुनश्च मुहुर्मुहुर्वारंवारं प्रतिक्षणं मोहयन् तु सन् एषोऽहकारोऽस्य मानवस्य भयं करोति त्रासमुत्पादयति । इत्थमहंकाराख्यः शत्रुरिंद्रियपरिवारः सुखासीन इव स्तंभहर्षादि-दोषैर्वर्धमानो मानवान्हर्षशोकभयेषु पातयति ॥ ४० ॥

39 It is of the nature of desire and anger, terrible, the source of pride and exultation. This egotism which is self-conceit, cannot be overcome by sinners.

Answering the second question. 'Terrible,' of horrible fruition here and in the next world. 'Pride', unconquerable vanity. 'Sinners,' whose evil actions lead only to birth and death again and again. 'Cannot be overcome by,' *i. e.* sinners cannot evade or withstand its attack.

40 Time after time it infatuates man, puts an end to his joy, makes him sorrowful and inspires fear.

This foul and vile principle O Arjuna, over on the look-out for man's weakness. The enemy in disguise acting

स एष कलुषः क्षुद्रश्छिद्रप्रेक्षी धनंजय ॥
रजःप्रवृत्तो मोहात्मा मनुष्याणामुपद्रवः ॥ ४१ ॥
काम एष क्रोध एष रजोगुणसमुद्भवः ॥
महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥ ४२ ॥

---

कः इति ४ चतुर्थप्रश्नोत्तरं

हे धनंजय अर्जुन, स एष उपरिवर्णितस्वरूपोऽहंकारः कलुषः गुणत्रयाधीनत्वान्मलिनोऽस्ति । क्षुद्रोऽधमस्वभावोऽधोगतिप्रदोऽस्ति । पुनश्च छिद्रप्रेक्षी किंचिन्मात्रेण क्षेत्रज्ञप्रज्ञापराधेन तद्बुद्धिभ्रंशं कृत्वा दुर्मार्गप्रेरणाय सर्वसत्ताधारको भवति येनापि छिद्रेण क्षत्या इहलोकपरलोकनाशको भवति स च रजोगुणप्राधान्येन प्रवृत्तो मोह एव आत्मा स्वरूपं यस्य एतादृशः सोऽहंकारो मनुष्याणामुपद्रवकरो विद्यते ॥ ४१ ॥

किमाचार इति (५) पंचमप्रश्नोत्तरं

रजोगुणसमुद्भव एषोऽहंकार एव कामोऽस्ति एषोऽहंकार एव क्रोधोऽस्ति । स च महाशनः अतृप्तस्वभाव ऐश्वर्यधनराज्यपुत्रकलत्रगृहादिलाभेऽप्यसंतुष्टः अतएव महापाप्मा तत्तद्विशेषप्राप्त्या पापपरंपरापरायण इह संसारे ब्रह्मैक्य-

through the senses first produces exultation by bestowing wealth and relation, then by disease and separation from loved ones it produces grief; thus deluding man again and again it makes him a prey to fear.

Next the fourth question 'what it is' is answered:

41 The product of passion, whose nature is infatuation, is the plague of mankind. This (egotism).

'Foul' as subject to the three qualities; 'vile', of the worst characteristics and leading to downfall. 'Ever on the...weakness', on the least deviation from soul-consciousness it drags down the intelligence and becomes potent for evil; any foible is enough standing ground for it to bring about our ruin in this world and the next.

42 It is desire, it is wrath, produced by the principle of passion. It is all-consuming, a great sinner. Know it to be the enemy in this world.

धूमेनाऽऽव्रियते वह्निर्यथादर्शो मलेन च ॥
यथोल्बेनाऽऽवृतो गर्भस्तथा तेनाऽयमावृतः ॥ ४३ ॥
आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा ॥
कामरूपेण कौन्तेय दुष्पूरणानलेन च ॥ ४४ ॥

---

प्राप्तिप्रयत्नवतां जनानां एनमहंकारं वैरिणमिष्टसिद्धौ विघ्नकारिणं विद्धि जानीहि ॥ ४२ ॥

यथा धूमेन वह्निरग्निः आव्रियते आच्छाद्यते धूमेनावृतो न दृश्यते। यथा च मलेन आदर्शो दर्पणं आच्छाद्यते मलेन धूल्याऽऽच्छादितं न दृश्यते। यथा उल्बेन गर्भवेष्टनेन चर्मणा जरायुणा गर्भ आवृतो न दृश्यते तथा तेनाऽहंकारेण उपर्युक्तलक्षणेन कामक्रोधरूपिणा आच्छादितोऽस्ति तेनायं क्षेत्रज्ञ आत्मा अहंकारेणावृतो विस्मृतात्मतत्त्वज्ञानो भवति ॥ ४३ ॥

हे कौंतेय अर्जुन, कामरूपेण पुनश्च दुष्पूरणानलेन दु:खेन पूर्यते तादृशः तर्पयितुमशक्येन अनलेन अग्निरूपिणा क्रोधमयेन एतेन उपयुक्तस्वभावेन ज्ञानिनो ब्रह्मज्ञानवतो नित्यवैरिणा सततं शत्रुरूपिणाहंकारेण मनुष्याणां ज्ञानं आवृतं आच्छादितमस्ति। यथा च नारायणोपनिषदि ६१-६२ मंत्रः कामोकार्षीन्नमोनमः। कामोऽकार्षीत्कामः करोति नाहं करोमि कामः कर्ता नाहं कर्ता कामः कारयिता नाहं कारयिता। एतत्ते काम कामाय स्वाहा ॥ मन्युरकार्षीन्नमोनमः। मन्युरकार्षीन्मन्युः करोति नाहं करोमि मन्यु कर्ता नाहं कर्ता मन्युः कारयिता नाहं कारयिता। एष ते मन्यो मन्यवे स्वाहा ॥ ४४ ॥

Answers the fifth question 'how does it work'. 'All-consuming': never satisfied however prosprous we may be with luxuries, wealth, dominion and relations; hence 'sinner', ever engaged in evil actions for obtaining this and that. 'Enemy' placing obstacles in the path of those who strive for union with the Brahman.

43 Even as fire is enveloped by smoke, the mirror by dust and the embryo by the amnion, so is this (soul) surrounded by the (egotism which is of the nature of desire and wrath, causing one to forget one's real self).

44 The wisdom of the wise is enveloped, O Arjuna, by this constant enemy in the form of desire and which (as anger) is a fire difficult to extinguish. For the agency of desire and anger see the verses of the *Narayan Upanishad* quoted in the Commentary.

इन्द्रियाणि मनोबुद्धिरस्याधिष्ठानमुच्यते ॥
एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनम् ॥ ४५ ॥
तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ ॥
पाप्मानं प्रजहीह्येनं ज्ञानविज्ञाननाशनम् ॥ ४६ ॥
इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः ॥
मनसस्तु परा बुद्धिर्बुद्धेर्यः परतस्तु सः ॥ ४७ ॥

---

इंद्रियाणि शब्दस्पर्शरूपरसगन्धग्राहकाणि श्रोत्रादीनि वाणीग्रहणगमनविसर्गानन्दप्रदानि वागादीनि मनो बुद्धिश्चेति अस्याऽहंकारस्य अधिष्ठानं आश्रयस्थानमुच्यते । एतैरिन्द्रियादिभिर्ज्ञानं आवृत्य आच्छाद्य देहिनं शरीरिणं क्षेत्रज्ञं एषोऽहंकारो मोहयति ॥ ४५ ॥

हे भरतर्षभ अर्जुन तस्मात् उपरि वर्णितकारणात् त्वं आदौ इंद्रियाणि मनसा नियम्य वशीकृत्य ज्ञानविज्ञाननाशनं एनं कामरूपमहंकारं पाप्मानं पापरूपिणं प्रजहीहि प्रकर्षेण सर्वबलेन नाशय ॥ ४६ ॥

कामक्रोधरूपिशत्रुहननं कस्य साहाय्येन कस्याश्रयेण केन साधनेन भवति यदि इंद्रियेषु मनसि बुद्धौ तस्य कामस्य अधिष्ठानमस्ति तर्हि इन्द्रियाणां मनसो बुद्ध्याश्च निग्रहोऽपि दुस्तरस्तेन कामस्य क्रोधपरिणामिनो हननमपि

45 The senses, the mind and the understanding are the seat of egotism. Enveloping the wisdom of man, this egotism infatuates him through the senses, the mind and understanding.

46 Therefore, O Arjuna, having first subdued the senses, slay (with all your might) this sinful (enemy, egotism) which puts an end to wisdom and knowledge.

"If egotism has its hold on the senses, the mind and the intellect, how is one to restrain these faculties? And how then are desire and anger to be conquered?" To meet this difficulty Shri Krishna points out in the next two stt. that the Supreme Lord is beyond the intellect and one should take refuge in Him:

47 It is said that the senses are beyond (*i. e.* superior to, the body.) The mind is superior to the senses, the intellect to the mind and the Supreme Self to the intellect.

धूमेनाऽऽव्रियते वह्निर्यथादर्शो मलेन च ॥
यथोल्बेनाऽऽवृतो गर्भस्तथा तेनाऽयमावृतः ॥ ४३ ॥
आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा ॥
कामरूपेण कौन्तेय दुष्पूरणानलेन च ॥ ४४ ॥

---

प्राप्तिप्रयत्नवतां जनानां एनमहंकारं वैरिणमिष्टसिद्धौ विघ्नकारिणं विद्धि जानीहि ॥ ४२ ॥

यथा धूमेन वह्निरग्निः आव्रियते आच्छाद्यते धूमेनावृतो न दृश्यते। यथा च मलेन आदर्शो दर्पणं आच्छाद्यते मलेन धूल्याऽऽच्छादितं न दृश्यते। यथा उल्बेन गर्भवेष्टनेन चर्मणा जरायुणा गर्भ आवृतो न दृश्यते तथा तेनाऽहंकारेण उपर्युक्तलक्षणेन कामक्रोधरूपिणा आच्छादितोस्ति तेनाय क्षेत्रज्ञ आत्मा अहंकारेणावृतो विस्मृतात्मतत्वज्ञानो भवति ॥ ४३ ॥

हे कौंतेय अर्जुन, कामरूपेण पुनश्च दुष्पूरणानलेन दुःखेन पूर्यते तादृशः तर्पयितुमशक्येन अनलेन अग्निरूपिणा क्रोधमयेन एतेन उपयुक्तस्वभावेन ज्ञानिनो ब्रह्मज्ञानवतो नित्यवैरिणा सततं शत्रुरूपिणाहंकारेण मनुष्याणां ज्ञानं आवृतं आच्छादितमस्ति। यथा च नारायणोपनिषदि ६१-६२ मंत्र. कामोकार्षीन्नमोनमः। कामोऽकार्षीत्कामः करोति नाहं करोमि काम. कर्ता नाहं कर्ता कामः कारयिता नाहं कारयिता। एतत्ते काम कामाय स्वाहा ॥ मन्युरकार्षीन्नमोनमः। मन्युरकार्षीन्मन्युः करोति नाहं करोमि मन्यु कर्ता नाहं कर्ता मन्युः कारयिता नाहं कारयिता। एष ते मन्यो मन्यवे स्वाहा ॥ ४४ ॥

Answers the fifth question 'how does it work'. 'All-consuming'. never satisfied however prosprous we may be with luxuries, wealth, dominion and relations; hence 'sinner', ever engaged in evil actions for obtaining this and that 'Enemy' placing obstacles in the path of those who strive for union with the Brahman.

43 Even as fire is enveloped by smoke, the mirror by dust and the embryo by the amnion, so is this (soul) surrounded by the (egotism which is of the nature of desire and wrath, causing one to forget one's real self).

44 The wisdom of the wise is enveloped, O Arjuna, by this constant enemy in the form of desire and which (as anger) is a fire difficult to extinguish. For the agency of desire and anger see the verses of the *Narayan Upanishad* quoted in the Commentary.

एवं बुद्धेः परं बुद्ध्वा संस्तभ्याऽऽत्मानमात्मना ॥
जहि शत्रुं महाबाहो कामरूपं दुरासदम् ॥ ४८ ॥

इति श्रीभगवद्गीतायां कर्मयोगो नाम तृतीयोध्यायः ॥ ३ ॥

---

दुरूहं इत्यादिशंकाकुलमर्जुनं निरीक्ष्य बुद्धेरपि यो परो नियामको भगवान्महेश्वरस्तं शरणं गच्छेत्याशयं श्लोकद्वयेन विशदयति इद्रियाणीत्यादिना-इन्द्रियाणि इंद्रियग्राह्येंद्रियार्थाधीनानि देहापेक्षया पराणि श्रेष्ठानि संति। इंद्रियाणामभावेन इहलोकपरलोकसिद्धिर्ब्रह्मसायुज्यं न सिद्ध्यति न संभवति अतः इष्टसिद्धिसाधनभूतानि इन्द्रियाणि स्थूलदेहात्प्रकृष्टानि आहुः योगिनो वदन्ति। इंद्रियेभ्यः इंद्रियापेक्षया मनः परं श्रेष्ठं समर्थं अधिकशक्तिसम्पन्नं इंद्रियनियामकत्वात् इंद्रियाणां प्रभुत्वात्। मनस मनोपेक्षया बुद्धिः परा श्रेष्ठा समर्था अधिकशक्तिमत्यस्ति। पश्चाद् बुद्धेः परतः परतः-परंपरया श्रेष्ठः बुद्धेरात्मा श्रेष्ठः आत्मनो महत्तत्वं महत्तत्वाद्व्यक्तमव्यक्तात्स पुरुषः शिवः श्रेष्ठोस्ति यथाव बुद्धेः परत. स पतच्छब्देन बुद्धे. परतः बुद्धेरपेक्षया सर्वश्रेष्ठो बुद्धिनियामको बुद्धिप्रेरकः स ईश्वरः परमात्मा अक्षरोऽविनाशी ब्रह्मरूपो महेश्वर. साक्षाच्छंकरोस्तीति

हे महाबाहो अर्जुन, उपर्युक्तप्रकारेण परंपरया बुद्धे परं श्रेष्ठं नियामकं महेश्वरं बुद्ध्वा ज्ञात्वा तत्तादात्म्यमनुभूय तन्मयो भूत्वा पश्चाज्ज्ञातेन बुद्धिवैमल्येन महेश्वरस्वरूपज्ञानपूर्णायां बुद्धौ कामाधिष्ठानं न संभवति बुद्धौ कामाधिष्ठानविरहेणैव मनसो निग्रहः संभवति कामविकला बुद्धिर्मनोनियंत्रणे न समर्था परं तया बुद्ध्या पूर्वं ब्रह्मरूपिमहेश्वरसाक्षात्कारो जातश्चेद् विमलया तया बुद्ध्या मनसो नियंत्रणं सुकरं शक्यमेव। अत आत्मना निर्मलीभूतया बुद्ध्या आत्मानं निर्मलीभूतं मनः संयम्य नियम्य निगृह्य कामरूपं कामरूपिणं क्रोधपरिणामिनं शत्रुं जहि ॥ ४७-४८ ॥

'Said' by the Yogins The senses are superior because without them there can be no knowledge of this world or the next, nor salvation The mind is superior because it controls the senses To fill up the other terms of the series, the principle of *Mahat* is superior to the intellect, the unperceived to the *Mahat*, and the Supreme Self or Lord to the unperceived. In effect the Lord is master and inspirer of the intellect.

48 Thus knowing the Supreme Self as superior to the intellect and controlling the mind by the intellect, O mighty one, slay the enemy in the form of desire difficult to conquer.

कठोपनिषद्यपि इदमेवोपदिष्टं यथाच—

इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ॥
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः ॥
महतः परमव्यक्तं अव्यक्तात्पुरुषः परः ॥
पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः ॥ कठ—वल्ली ३
इन्द्रियेभ्यः परं मनः मनसः सत्त्वमुत्तमं ॥
सत्त्वादधिमहानात्मा महतोऽव्यक्तमुत्तमं ॥
अव्यक्तात्तु परः पुरुषो व्यापकोऽलिंग एव च ॥
यज्ज्ञात्वा मुच्यते जंतुरमृतत्वं च गच्छति ॥ कठ—वल्ली–६

यथाच भगवान्बादरायणो गीताकारो व्यासः स्वयं महाभारतेऽनुशासनपर्वणि १४ अध्याये भीष्मस्य श्रीकृष्णस्य च वचनानि वर्णयति—

भीष्मः—अशक्तोऽहं गुणान्वक्तुं महादेवस्य धीमतः ॥ यो हि सर्वगतो देवो न च सर्वत्र दृश्यते ॥ ब्रह्मविष्णुसुरेशानां स्रष्टा च प्रभुरेव ॥ च ॥ ब्रह्मादय पिशाचांता यं हि देवा उपासते ॥ प्रकृतीनां परत्वेन पुरुषस्य च यः परः ॥ चिन्त्यते यो योगविद्भिर्ऋषिभिस्तत्त्वदर्शिभिः ॥ सदा भक्त्या तु कृष्णेन जगद्व्याप्तं महात्मना ॥ प्रसाद्य वरदं देवं चराचरगुरुं शिवं ॥ युगे युगे तु कृष्णेन तोषितो वै महेश्वरः ॥ भक्त्या परमया चैव प्रीतश्चैव महात्मनः ॥

श्रीकृष्णः—न गतिं कर्मणां शक्या नेतुमीशस्य तत्त्वतः ॥ हिरण्यगर्भप्रमुखा देवाः सेंद्रा महर्षयः ॥ न विदुर्यस्य भवनमादित्याः सूक्ष्मदर्शिनः ॥ तस्मात्परं त्वामृषयो वदन्ति

इति श्री भगवद् गीतायां राजवैद्य जीवरामशास्त्रिणा कालिदासात्मजेन काठियावाडांतर्गतगोंडलनिवासिना विरचितायां चन्द्रघंटाख्यटीकायां कर्मयोगो नाम तृतीयोध्यायः ॥ ३ ॥

Knowing' and becoming one with The intellect which is filled by the knowledge of the Lord will no more be a receptacle of desire, it has become utterly pure and desireless, it can now control and direct the mind 'Desire,' understanding anger too ( Cf the verses from the *Katha Upanishad* quoted in the Commentary )

Thus ends the Third Chapter entitled "Yoga of Action," (*Karma Yoga*) in the English Rendering of the Commentary 'Chandra—Ghanta' by Rajavaidya Jivarama Shastri, son of Kalidasa, Gondal (Kathiawar) on the Bhagvad Gita .